


# वेदांतस्तोत्रसंग्रहस्य द्वितीयोभागः

## सूचीपत्रं

श्रीसच्चिदानंदात्मने नमः॥अथ हरिस्तुति प्रारंभः॥
स्तोष्ये भक्त्या विष्णुमनादिं जगदादिं यस्मिन्नेतत्सं
सृतिचक्रं भ्रमतीत्थम्॥ यस्मिन्दृष्टे नश्यतितत्संसृ-
तिचक्रं तं संसारध्वांतविनाशं हरिमीडे ॥ १ ॥ य-
स्यैकांशादित्थमशेषं जगदेतत् प्रादुर्भूतं येनपिनद्धं
पुनरित्थम्॥येन व्याप्तं येन विबुद्धं सुखदुःखै स्तंसं
सारध्वांतविनाशं हरिमीडे॥२॥सर्वज्ञो यो यश्च हि
सर्वः सकलो यो यश्चानंदोऽनंतगुणो यो गुणधामा॥
यश्चाव्यक्तो व्यस्तसमस्तः सदसद्यस्तं संसारध्वा-
त० ॥३॥ यस्मादन्यंनास्त्यपि नैवं परमार्थं दृश्या-

दन्यो निर्विषयज्ञानमयत्वात्॥ज्ञातृज्ञानज्ञेयविही-
नोपि सदा ज्ञ स्तं संसार० ॥ ४ ॥ आचार्येभ्यो
लब्धसुसूक्ष्माच्युततत्त्वा वैराग्येणाभ्यासबलाच्चैव
द्रढिम्ना ॥ भक्त्यैकाग्र्यध्यानपरा यं विदुरीशं तंसंसा-
र० ॥५॥ प्राणानायम्योमितिचित्तं हृदि रुध्वा ना-
न्यत्स्मृत्वातत्पुनरत्रैव विलाप्य ॥ क्षीणे चित्ते भाहृ-
शिरस्मीति विदुर्यं तंसंसार० ॥ ६ ॥ यं ब्रह्माख्यं
देवमनन्यं परिपूर्णं हृत्स्थं भक्तैर्लभ्यमजं सूक्ष्ममत-
र्क्यं ॥ ध्यात्वात्मस्थं ब्रह्मविदो यं विदुरीशं तंसंसा
र० ॥ ७ ॥ मात्रातीतं स्वात्मविकाशात्मविबोधं

ज्ञेयातीतं ज्ञानमयं हृद्युपलभ्यम्॥भावग्राह्यानंदमनन्यं च विदुर्यं तं संसार० ॥ ८ ॥ यद्यद्वेद्यं वस्तुसतत्त्वं विषयाख्यं तत्तद्ब्रह्मैवेति विदित्वा तदहं च ॥ ध्यायंत्येवं यं सनकाद्या मुनयोऽजं तं संसार०॥९॥ यद्यद्वेद्यं तत्तदहं नेति विहाय स्वात्मज्योतिर्ज्ञानमयानंदमवाप्य ॥ तस्मिन्नस्मीत्यात्मविदो यं विदुरीशं तं संसार० ॥१०॥ हित्वा हित्वा दृश्यमशेषं सविकल्पं मत्वा शिष्टं भादृशिमात्रं गगनाभं ॥ त्यक्त्वा देहं यं प्रविशंत्य च्युतभक्ता स्तंसंसार० ॥११॥ सर्वत्रास्ते सर्वशरीरी न च सर्वः सर्वं वेत्त्येवेह न यं वेत्ति च

सर्वः॥सर्वत्रातर्यामितयेत्थं यमयन्य॥स्तं संसार०
॥१२॥सर्वं दृष्ट्वा स्वात्मनि युक्त्या जगदेतद् दृष्ट्वात्मानं
चैवमजं सर्वजनेषु ॥ सर्वात्मैकोऽस्मी तिविदुर्यं जन
हृत्स्थं तं संसार० ॥ १३ ॥ सर्वत्रैकः पश्यति जि
घ्रत्यथ भुंक्ते स्प्रष्टा श्रोता बुध्यति चेत्याहुरिमं यं ॥
साक्षी चास्ते कर्तृषु पश्यन्निति चान्ये तं संसार०॥
॥१४॥पश्यन् शृण्वन्नत्र विजानन् रसयन्रसन् जि
घ्रन्विभ्रद्देहमिमं जीवतयेत्थं॥इत्यात्मानं यं विदुरीशं
विषयज्ञं तं संसार० ॥ १५ ॥ जाग्रद्दृष्ट्वा स्थूलप
दार्थानथमायां दृष्ट्वा स्वप्नेथापि सुषुप्तौ सुखनिद्रां ॥

इत्यात्मानं वीक्ष्यमुदास्तेचतुरीये तंसंसार०॥१६॥
पश्यन्शुद्धोप्यक्षरएकोगुणभेदान्नानाकारान् स्फा
टिकवद्भातिविचित्रः ॥ भिन्नच्छिन्नश्चायमजःकर्म
फलैर्य स्तंसंसार० ॥ १७ ॥ ब्रह्माविष्णूरुद्रहुता-
शौरविचंद्रा विंद्रोवायुर्यज्ञइतीत्थंपरिकल्प्य ॥ एकं
संतंयंवहुधाहुर्मतिभेदा त्तं संसार०॥१८॥ सत्यंज्ञा-
नं शुद्धमनन्तंव्यतिरिक्तं शांतंगूढं निष्कलमानंदम-
नन्यं॥इत्याहादौ यंवरुणोऽसौ भृगवेजं तं संसार०
॥१९॥कोशानेतान्पंचरसादीऽनतिहाय ब्रह्मास्मीति
स्वात्मनिनिश्चित्य दृशिस्थः॥ पित्रा दिष्टो वेदभृगुर्यं

यजुरंते तं संसार०॥२०॥येनाविष्टो यस्यचशक्त्या
यदधीनः क्षेत्रज्ञोयं कारयिता जंतुषुकर्त्तुः ॥ कर्त्ता
भोक्तात्मात्रहिचिच्छक्त्यधिरूढ स्तंसंसार०॥२१॥
सृष्ट्वासर्वं स्वात्मतयैवेत्थमतर्क्यं व्याप्याथांतःकृत्स्न
मिदंसृष्टमशेषं॥सच्चत्यच्चाभूत्परमात्मासयएक स्तं
संसार० ॥ २२ ॥ वेदांतैश्चाध्यात्मिकशास्त्रैश्चपुरा
णैः शास्त्रैश्चान्यैःसात्वततंत्रैश्चयमीशं ॥ दृष्ट्वाथांत
श्चेतसिबुध्वाविविशुर्यं तं संसार० ॥ २३ ॥ श्रद्धा
भक्तिध्यानशमाद्यैर्यतमानैर्ज्ञातुंशक्योदेवइहैवाशुय
ईशः ॥ दुर्विज्ञेयोजन्मशतैश्चापिविनातै स्तंसंसार॥

॥ २४ ॥ यस्यातर्क्यं स्वात्मविभूतेः परमार्थं सर्वं ख-
ल्वित्यत्र निरुक्तं श्रुतिविद्भिः ॥ तज्जादित्वादब्धितरंगाभमभिन्नं तं सार० ॥२५॥ दृष्ट्वा गीतास्वक्षरतत्त्वं
विधिनाजं भक्त्या गुर्व्या लभ्य हृदिस्थं दृशि मात्रं ॥
ध्यात्वा तस्मिन्नस्म्यहमित्यत्र विदुर्यं तं संसार०
॥ २६ ॥ क्षेत्रज्ञत्वं प्राप्य विभुः पंचमुखैर्यो भुंक्तेऽजस्रं
भोग्यपदार्थान् प्रकृतिस्थः ॥ क्षेत्रेक्षेत्रेऽप्स्विदुवदेको
बहुधाऽऽस्ते तं संसार० ॥२७॥ युक्त्यालोच्य व्यासवचांस्यत्र हि लभ्यः क्षेत्रक्षेत्रज्ञांतरविद्भिः पुरुषाख्यः ॥ योऽहं सोऽसौ सोऽस्म्यहमेवेति विदुर्यं तं संसा०

॥२८॥एकीकृत्यानेकशरीरस्थमिमं ज्ञं यं विज्ञायेहै-
व स एवाशु भवंति ॥ यस्मिँल्लीना नेह पुनर्जन्म लभंते
तं संसार० ॥२९॥ द्वैतैकत्वं पद्म मधु ब्राह्मणवाक्यैः
कृत्वा शक्रोपासनमासाद्य विभूत्या ॥ योऽसौ सोहं
सोस्म्यहमेवेति विदुर्यं तं संसार ० ॥ ३० ॥ योयं
देहे चेष्टयितांतःकरणस्थः सूर्ये चासौ तापयिता सो-
स्म्यहमेव ॥ इत्यात्मैक्योपासनया यं विदुरीशं तं सं-
सार०॥३१॥ विज्ञानांशो यस्य सतः शक्त्यधिरूढो
बुद्धिर्बुध्यत्यत्र बहिर्बोध्यपदार्थान् ॥ नैवांतस्थं बुध्य-
ति यं बोधयितारं तं संसार०॥३२॥कोयं देहे देव इती

त्थं सुविचार्य ज्ञाता श्रोता नंदयिता चैष हि देवः इत्या-
लोच्य ज्ञांश इहास्मीति विदुर्यं तं संसार० ॥ ३३ ॥
को ह्येवान्यादात्मनि न स्यादयमेषः ह्येवानंदः प्राणि-
ति चापानिति चेति॥इत्यस्तित्वं वक्त्युपपत्त्या श्रुति-
रेषा तंसंसार०॥३४॥प्राणो वाऽहं वाक्श्रवणादीनि
मनो वा बुद्धिर्वाऽहं व्यस्त उताहोपि समस्तः॥इत्या-
लोच्य ज्ञप्तिरिहास्मीति विदुर्यं तं संसासार० ३५॥
नाहं प्राणो नैव शरीरं न मनोहं नाहं बुद्धिर्नाहमहंका-
रधियौ च॥योत्र ज्ञांशः सोस्म्यहमेवेति विदुर्यं तं संसा-
र० ॥३६॥ सत्तामात्रं केवलविज्ञानमजं सत् सूक्ष्मं

नित्यंतत्त्वमसीत्यात्मसुताय॥साम्नामंते प्राहपिता यं
विभुमाद्यं तं संसार० ॥३७॥ मूर्त्तामूर्त्ते पूर्वमपोह्याथ
समाधौ दृश्यं सर्वं नेति च नेतीति विहाय॥ चैतन्यांशे
स्वात्मनि संतं च विदुर्यं तं संसार० ॥३८॥ ओतं
प्रोतं यत्र च सर्वं गगनांतं योऽस्थूलानण्वादिषु सिद्धो-
ऽक्षरसंज्ञः॥ज्ञाताऽतोऽन्यो नेत्युपलभ्यो न च वेद्यस्तं
संसार० ॥३९॥ तावत्सर्वं सत्यमिवाभाति यदेत-
द्यावत्सोऽस्मीत्यात्मनि योज्ञो न हि दृष्टः॥ दृष्टे तस्मिन्
सर्वमसत्यं भवतीदं तं संसार० ॥ ४० ॥ रागामुक्तं
लोहयुतं हेम यथाऽग्नौ योगाष्टांगैरुज्ज्वलितज्ञानम-

थाग्नौ दग्ध्वाऽऽत्मानं ज्ञं परिशिष्टं च विदुर्यं तं संसार०
४१ यं विज्ञानज्योतिषमाद्यं सुविभांतं हृद्यर्केद्वऽग्न्यो
कसमीड्यं तडिदाभं ॥ भक्त्याऽऽराध्यैहैव विशंत्या-
त्मनि संतं तं संसार ० ॥ ४२ ॥ पायाद्भक्तं स्वात्म-
नि संतं पुरुषं यो भक्त्या स्तौतीत्यांगिरसं विष्णु-
रिमं मां । इत्यात्मानं स्वात्मनि संहृत्य सदैकस्तं
संसार ० ॥४३॥ इत्थं स्तोत्रं भक्तजनेड्यं भवभीति-
ध्वांतार्काभं भगवत्पादीयमिदं यः ॥ विष्णोर्लोकं पठ-
ति शृणोति व्रजति ज्ञो ज्ञानं ज्ञेयं स्वात्मनि चाप्नोति
मनुष्यः ॥४४॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य

श्रीमच्छंकराचार्यविरचिता हरिस्तुतिः समाप्ता ॥ ॥ ॥
॥ श्रीसच्चिदानंदाय नमः ॥ श्रीसद्गुरुभ्यो नमः ॥
अथात्मबोधप्रारंभः ॥तपोभिः क्षीणपापानां शांता
नां वीतरागिणां॥मुमुक्षूणामपेक्ष्योयऽमात्मबोधो वि
धीयते॥१॥बोधोन्यसाधनेभ्यो हि साक्षान्मोक्षैक-
साधनं ॥ पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सि-
ध्यति॥२॥अविरोधितया कर्म नाविद्यां विनिवर्त्तये-
त्॥विद्याविद्यां निहंत्येव तेजस्तिमिरसंऽघवत्॥३॥
परिच्छिन्न इवाज्ञाना त्तन्नाशे सति केवलः॥स्वयं प्र-
काशते ह्यात्मा मेघापायेंशुमानिव॥४॥अज्ञानकलुषं

जीवं ज्ञानाभ्यासाद्धि निर्मलं॥कृत्वाज्ञानं स्वयं नश्ये-
ज्जलं कतकरेणुवत् ॥५॥संसारः स्वप्नतुल्यो हि रा-
गद्वेषादिसंकुलः ॥ स्वकाले सत्यवद्भाति प्रबोधे स-
त्यसद्भवेत्॥६॥तावत्सत्यं जगद्भाति शुक्तिकारज-
तं यथा॥यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयं॥७॥
सच्चिदात्मन्यनुस्यूते नित्ये विष्णौ प्रकल्पिताः॥व्य-
क्तयो विविधाः सर्वा हाटके कटकादिवत्॥८॥यथा-
काशो हृषीकेशो नानोपाधिगतो विभुः॥ तद्भेदाद्भि-
न्नवद्भाति तन्नाशे सति केवलः॥९॥नानोपाधिवशा-
देव जातिवर्णाश्रमादयः ॥ आत्मन्यारोपितास्तोये

रसवर्णादिभेदवत् ॥१०॥ पंचीकृतमहाभूतऽसंभवं
कर्मसंचितं ॥शरीरं सुखदुःखनां भोगायतनमुच्यते
॥११॥ पंचप्राणमनोबुद्धि दशेंद्रियसमन्वितं ॥ अपं-
चीकृतभूतोत्थं सूक्ष्मांगं भोगसाधनं॥१२॥अनाद्य-
विद्यानिर्वाच्या कारणोपाधिरुच्यते ॥ उपाधित्रित-
यादन्यऽमात्मानमवधारयेत्॥१३॥पंचकोशादियो-
गेनतत्तन्मय इव स्थितः॥शुद्धात्मा नीलवस्त्रादि योगे-
न स्फटिको यथा॥१४॥वपुस्तुषादिभिः कोशै र्युक्तं
युक्त्यावघाततः॥आत्मानमंतरं शुद्धं विविच्यात्तंदुलं
यथा॥१५॥सदा सर्वगतोप्यात्मा न सर्वत्रावभासते॥

बुद्धावेववाभासेत स्वच्छेषु प्रतिबिंबवत् १६ देहेंद्रिय-
मनोबुद्धि प्रकृतिभ्यो. विलक्षणं॥तद्वृत्तिसाक्षिणं वि
द्यादात्माऽनंराजवत्सदा १७ व्यापृतेष्विंद्रियेष्वात्मा
व्यापारीवाविवेकिनां॥दृश्यतेभ्रेषु धावत्सु धावन्निव
यथा शशी॥१८॥आत्मचैतन्यमाश्रित्य देहेंद्रियम-
नोधिय:॥स्वकीयार्थेषु वर्त्तंते सूर्यालोकं यथा जना-
॥१९॥देहेंद्रियगुणान्कर्माऽण्यमले सच्चिदात्मनि ॥
अध्यस्यंत्यविवेकेन गगने नीलतादिवत्॥२०॥अ-
ज्ञानान्मानसोपाधे: कर्तृत्वादी निचात्मनि॥कल्प्यं-
तेंबुगते चंद्रे चलनादि यथांभस: ॥२१॥ रागेच्छा

सुखदुःखादि बुद्धौ सत्यां प्रवर्त्तते॥सुषुप्तौ नास्तित-
न्नाशे तस्माद्बुद्धस्तु नात्मनः ॥२२॥ प्रकाशोऽर्कस्य
तोयस्य शैत्यमग्नेर्यथोष्णता॥स्वभाव सच्चिदानंदनि-
त्य निर्मलतात्मः॥२३॥आत्मनःसच्चिदंशश्च बुद्धेर्वृ-
त्तिरिति द्वयं॥संयोज्य चाविवेकेन जानामीति प्रवर्त्तते
२४आत्मनो विक्रिया नास्ति बुद्धेर्बोधो न जात्विति
जीवः सर्वमलं ज्ञात्वा कर्त्ता द्रष्टेति मुह्यति ॥२५॥
रज्जुसर्पवदात्मानं जीवं ज्ञात्वा भयं वहेत्॥नाहं जीवः
परात्मेति ज्ञातं चेन्निर्भयो भवेत्॥२६॥आत्मावभा-
सयत्येको बुध्यादीनींद्रियाणि हि॥ दीपो घटादिव

त्स्वात्मा जडैस्तैर्नावभास्यते॥२७॥ स्वबोधे नान्य-
बोधेच्छ बोधरूपतयात्मनः ॥न दीपस्यान्यदीपेच्छा
यथा स्वात्मा प्रकाशते॥२८॥निषिध्य निखिलोपा-
धीन्नेति नेतीति वाक्यतः॥विद्यादैक्यं महावाक्यैर्जी-
वात्मपरमात्मनोः ॥२९॥ आविद्यकं शरीरादि दृश्यं
बुद्बुदवत् क्षरं॥एतद्विलक्षणं विद्यादहं ब्रह्मेति निर्म-
लं॥३०॥देहान्यत्वान्नमे जन्मजराकार्श्यलयादयः
शब्दादिविषयैःसंगो निरिंद्रियतया न च॥ ३१॥अ-
मनस्त्वान्नमे दुःखरागद्वेषभयादयः॥अप्राणो ह्यम-
नाःशुभ्र इत्यादिश्रुतिशासनात् ॥३२॥निर्गुणो नि-



ष्क्रिया नित्यो निर्विकल्पो निरंजनः॥निर्विकारो नि
राकारो नित्यमुक्तोस्मि निर्मलः॥३३॥अहमाकाश-
वत्सर्वं बहिरंतर्गतोच्युतः॥सदा सर्वसमः शुद्धो निः
संगो निर्मलोचलः ॥३४॥ नित्यशुद्धविमुक्तैकमखं
डानंदमद्वयं॥सत्यं ज्ञानमनंतं यत् परं ब्रह्माहमे वत-
त्॥३५॥ एवं निरंतराभ्यस्ता ब्रह्मैवास्मीति वास-
ना॥हरत्यविद्या विक्षेपान् रोगानिव रसायनं॥३६॥
विविक्तदेश आसीनो विरागो विजितेंद्रियः ॥भाव-
येदेकमात्मानं तमनंतमनन्यधीः॥३७॥ आत्मन्ये-
वाखिलं दृश्यं प्रविलाप्य धिया सुधीः॥भावयेदेक

मात्मानं निर्मलाकाशवत्सदा ॥३८॥ रूपवर्णादिकं सर्वं विहाय परमार्थवित् ॥परिपूर्णचिदानंदस्वरूपेणावतिष्ठते॥ ३९ ॥ज्ञातृज्ञानज्ञेयभेदः परात्मनि न विद्यते ॥ चिदानंदैकरूपत्वाद्दीप्यते स्वयमेव हि ॥ ॥४०॥एवमात्मारणौ ध्यानमथने सततं कृते॥उदितावगतिर्ज्वाला सर्वाज्ञानेंधनं दहेत् ॥ ४१ ॥ अरुणेनेव बोधेन पूर्वसंतमसे हृते ॥तत आविर्भवेदात्मा स्वयमेवांशुमानिव ॥४२॥ आत्मा तु सततं प्राप्तो प्यप्राप्तवदविद्यया॥तन्नाशे प्राप्तवद्भाति स्वकंठाभरणं यथा॥४३॥स्थाणौ पुरुषवद्भ्रांत्या कृताब्रह्माणि

जीवता॥जीवस्य तात्विके रूपे तस्मिन् दृष्टे निवव-
र्त्तते॥४४॥तत्त्वस्वरूपानुभवादुत्पन्नं ज्ञानमंजसा ॥
अहंममेति चाज्ञानं बाधते दिग्भ्रमादिवत् ॥४५॥
सम्यग्विज्ञानवान् योगी स्वात्मन्येवाखिलं स्थितं ॥
एकं च सर्वमात्मान वीक्षते ज्ञानचक्षुषा ॥४६॥आ
त्मैवेदं जगत्सर्वमात्मनोन्यन्न विद्यते ॥ मृदो यद्वद्घ-
टादीनि स्वात्मानं सर्वमीक्षते॥४७॥जीवन् मुक्तस्तु
तद्विद्वान् पूर्वोपाधिगुणांस्त्यजेत् ॥ स च्चिदानंदरूप
त्वा द्भवेद्भ्रमरकीटवत्॥४८॥ तीर्त्वा मोहार्णवं हत्वा
रागद्वेषादिराक्षसान्॥योगी शांतिसमायुक्तो ह्यात्मा

रामो विराजते ॥४९॥ उपाधिस्थोपि तद्धर्मैर्नलिप्तो
व्योमवन्मुनिः॥सर्वविन्मूढवत्तिष्टे दसक्तो वायुवच्चरेत्
॥५०॥बाह्यानित्यसुखासक्तिं हित्वात्मसुखनिर्वृतः॥
घटस्थदीपवत्स्वच्छः स्वांतरेव प्रकाशते ॥ ५१ ॥
उपाधिविलयाद्विष्णौ निर्विशे पंविशेन्मुनिः॥जले
जलं वियद्व्योम्नि तेजस्तेजसिवा यथा ॥५२॥ य-
ल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखं॥यज्ज्ञा-
नान्नापरं ज्ञानं तद्ब्रह्मेत्यवधारयेत् ॥५३॥ यद्दृष्ट्वा
नपरं दृश्यं यद्भूत्वा न पुनर्भवः ॥ यज्ज्ञात्वा न परंज्ञेयं
तद्ब्रह्मेत्यवधारयेत् ॥५४॥ तिर्यगूर्ध्वमधःपूर्णं स

जीवता॥जीवस्य तात्विके रूपे तस्मिन् दृष्टे निवव-
र्त्तते॥४४॥तत्त्वस्वरूपानुभवादुत्पन्नं ज्ञानमंजसा ॥
अहंममेति चाज्ञानं बाधते दिग्भ्रमादिवत् ॥४५॥
सम्यग्विज्ञानवान् योगी स्वात्मन्येवाखिलं स्थितं ॥
एकं च सर्वमात्मान वीक्षते ज्ञानचक्षुषा ॥४६॥आ
त्मैवेदं जगत्सर्वमात्मनोन्यन्न विद्यते ॥ मृदो यद्वद्घ-
टादीनि स्वात्मानं सर्वमीक्षते॥४७॥जीवन् मुक्तस्तु
तद्विद्वान् पूर्वोपाधिगुणांस्त्यजेत् ॥ स च्चिदानंदरूप
त्वा द्भवेद्भ्रमरकीटवत्॥४८॥ तीर्त्वा मोहार्णवं हत्वा
रागद्वेषादिराक्षसान्॥योगी शांतिसमायुक्तो ह्यात्मा

रामो विराजते ॥४९॥ उपाधिस्थोपि तद्धर्मैर्नलिप्तो
व्योमवन्मुनिः॥सर्वविन्मूढत्तिष्ठे दसक्तो वायुवच्चरेत्
॥५०॥बाह्यानित्यसुखासक्तिं हित्वात्मसुखनिर्वृतः॥
घटस्थदीपवत्स्वच्छः स्वांतरेव प्रकाशते ॥ ५१ ॥
उपाधिविलयाद्विष्णो निर्विशे षंविशेन्मुनिः॥जले
जलं वियद्व्योम्नि तेजस्तेजसिवा यथा ॥५२॥ य-
ल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखं॥यज्ज्ञा-
नान्नापरं ज्ञानं तद्ब्रह्मेत्यवधारयेत् ॥५३॥ यद्दृष्ट्वा
नपरं दृश्यं यद्भूत्वा न पुनर्भवः ॥ यज्ज्ञात्वा न परंज्ञेयं
तद्ब्रह्मेत्यवधारयेत् ॥५४॥ तिर्यगूर्ध्वमधः पूर्णं स

च्चिदानंदमव्ययम् ॥ अनंतं नित्यमेकं यत्तद्ब्रह्मेत्य-
वधारयेत् ॥५५॥ अतद्व्यावृत्तिरूपेण वेदांतैर्लक्ष्यते
व्ययं ॥ अखंडानंदमेकं यत्तद्ब्रह्मेत्यवधारयेत्॥५६॥
अखंडानंदरूपस्य तस्यानंदलवाश्रिताः ॥ ब्रह्माद्या-
स्तास्तस्येन भवस्यानंदिनोऽखिलाः॥५७॥तद्युक्त-
मखिलं वस्तु व्यवहारस्तदान्वितः ॥ तस्मात्सर्वगतं
ब्रह्म क्षीरे सर्पिरिवाखिले॥५८॥अनण्वस्थूलमन्ह-
स्व मदीर्घमजमव्ययं ॥ अरूपगुणवर्णाख्यं तद्ब्रह्मे
त्यवधारयेत् ॥५९॥ यद्भासा भासतेर्कादि र्भास्यैर्य
तुन भास्यते॥येन सर्वमिदं भाति तद्ब्रह्मेत्यवधारयेत्

॥६०॥ स्वयमंतर्बहिर्व्याप्य भासयन्नखिलं जगत्॥
ब्रह्म प्रकाशते वन्हि प्रतप्तायसपिंडवत् ॥ ६१ ॥ ज
गद्विलक्षणं ब्रह्म ब्रह्मणोन्यन्नकिंचन॥ ब्रह्मान्यद्भाति
चेन्मिथ्या यथा मरुमरीचिका ॥ ६२ ॥ दृश्यतेश्रू-
यते यद्यद्ब्रह्मणो न्यन्नतद्भवेत् ॥ तत्त्वज्ञानाच्चऽतब्रह्म
सच्चिदानंदमद्वयं ॥६३॥सर्वगं सच्चिदात्मानं ज्ञानच
क्षुर्निरीक्षते॥अज्ञानचक्षुर्नेक्षेत भास्वंतं भानुमंधवत्
॥६४॥ श्रवणादिभिरुद्दीप्तो ज्ञानाग्निपरितापित:॥
जीव:सर्वमलान्मुक्त: स्वर्णवद्द्योतते स्वयं ॥६५॥
हृदाकाशोदितो ह्यात्मा बोधभानुस्तमोऽपहृत् ॥

सर्वव्यापी सर्वधारी भाति सर्वं प्रकाशते ॥ ६६ ॥
दिग्देशकालाद्यनपेक्ष्य सर्वगं शीतादिहृन्नित्यसुखं
निरंजनं॥ यः स्वात्मतीर्थं भजतेविनिष्क्रियः स सर्व
वित्सर्वगतोऽमृतोभवेत् ॥ ६७ ॥ इतिश्रीमत्परम
हंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यकृतआत्मबो
धःसमाप्तः ॥ ॥ शुभं भवतु ॥
श्रीगणेशायनमः॥वेदो नित्यमधीयतां तदुदितंकर्म
स्वनुष्ठीयतां ते ने शस्यविधीता मपचितिःकाम्येम
तिस्त्यज्यतां ॥ पापौघःपरिधूयतां भवसुखे दोषोनु
संधीयता मात्मेच्छाव्यवसीयतां निजगृहात्तूर्णंविनि

गम्यताम्॥१॥संग: सत्सुविधीयतां भगवतो भक्ति
र्दृढाधीयतां शांत्यादि:परिचियतांदृढतरं कर्माशुसं
त्यज्यतां॥ सद्विद्वानुपसर्प्यतांप्रतिदिनं तत्पादुकेसे
व्यतां ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरो वाक्यंसमाक
र्ण्यतां॥२॥ वाक्यार्थश्चविचार्यतां श्रुतिशिर:पक्ष:स
माश्रीयतांदुस्तर्कात्सुविरम्यतां श्रुतिमतस्तर्कोनुसं
धीयतां॥ब्रह्मै वास्मि विभाव्यता महरहो गर्व: परि
त्यज्यतां देहेहं मतिरुज्झतां बुधजनैर्वाद:परित्यज्य
ताम्॥३॥क्षुद्व्याधिश्चचिकित्स्यतां प्रतिदिनंभिक्षौ
षधंभुज्यतांस्वाद्वन्नं नतु याच्यतां विधिवशात्प्राप्तेन
संतुष्यतां॥शीतोष्णादि विषह्यतां नतुवृथा वाक्यंस-

मुच्चार्यतां मौदासीन्यमभीप्स्यतां जनकृपा नैष्ठुर्यमु
त्सृज्यताम्॥४॥ एकांते सुखमास्यतां परतरे चेतःस-
माधीयतां पूर्णात्मासुसमीक्ष्यतां जगदिदं तद्बाधितंद्द-
श्यतां प्राक्कर्मप्रविलाप्यतां चितिवलान्नाप्युत्तरैःश्लि-
ष्यतां प्रारब्धं त्विहभुज्यता मथपरंब्रम्हात्मनास्थी
यतां ॥५॥ यःश्लोकपंचकमिदं पठते मनुष्यः संचिंत
यत्यनु दिनं स्थिरता मुपेत्य॥तस्याशुसंसृतिदवानल-
तीव्र घोर तापःप्रशांति मुपयाति चितिप्रसादात्॥६॥
इति श्रीमच्छंकराचार्यविरचितंसाधनपंचकंसंपूर्णम्
श्रीगणेशायनमः ॥श्रीभगवानुवाच॥ज्ञानं परमगुह्यं

मे यद्विज्ञानसमन्वितम्॥सरहस्यंतदंगं च गृहाणगदि
तं मया॥१॥यावानहं यथाभावो यद्रूपगुणकर्मकः॥
तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात्॥२॥अहमेवा
समेवाऽग्रे नान्यद्यत्सदसत्परं॥पश्चादहं यदेतच्च योऽव
शिष्येतसोऽस्म्यहम्॥३॥ऋतेऽर्थंयत्प्रतीयेत न प्रती
येतचात्मनि ॥ तद्विद्यादात्मनो मायांयथा भासो य-
थातमः॥४॥यथा महांति भूतानि भूतेषूच्चावचेष्वनु॥
प्रविष्टान्य प्रविष्टानि तथा तेषु न तेष्वहं॥५॥एताव
देव जिज्ञास्यं तत्त्वजिज्ञासुनाऽत्मनः॥अन्वयव्यतिरे
काभ्यां यत्स्यात्सर्वत्रसर्वदा ॥६॥ एतन्मतं समाति

ष्ट परमेण समाधिना॥भवान्कल्पविकल्पेषु न विमु
ह्यतिकर्हिचित् ॥७॥ इति श्रीभागवते महापुराणेऽ
ष्टादशसाहस्र्यांसंहितायांवैय्यासिक्यांद्वितीयस्कंधे
भगवद्ब्रह्मसंवादे चतुःश्लोकीभागवतंसमाप्तम् ॥
गुरुर्नसस्यात्स्वजनोनसस्यात्पितानसस्याज्जननी
नसास्यात् ॥ दैवंनतत्स्यान्नपतिश्चसस्यान्नमोच
येद्यः समुपेतमृत्युं ॥ १ ॥ नीरक्षीरनयेनतथ्यावितथे
संपिंडितेपंडितै र्दुर्बोधेसकलैर्विवेचयतियः श्रीशंक
राख्योमुनिः ॥ हंसोयंपरमोस्तुयेपुनरिहाशक्तास्स
मस्ताःस्थिताजृंभान्निंबफलाशनैकरसिकान्काका

नमून्मन्महे ॥१॥ कपिलपतंजलिगौतमकणभूक्
प्रमुखाःक्षमांमयिकुरुध्वं ॥ स्वधनंभवत्सुमोहाच्छु
तिगंविस्मृत्यशोधितंमुधा ॥ १ ॥ समाप्तम् ॥

इदं पुस्तकं पण्डित ज्येष्ठरामात्मजं रविशंकरेण
गुजराती मुद्रणालये मुद्रितम् ॥

शके १८२३ संवत् १९५७

पण्डित नारायणमूलजी
कालबादेविरोड रामवाडी एतेषां पुस्तकालये लभ्येत.

॥इति वेदांतस्तोत्रसंग्रह समाप्तः॥

# वेदांतस्तोत्रसंग्रहस्य द्वितीयोभागः

## सूचीपत्रं

श्रीसच्चिदानंदात्मने नमः॥अथ हरिस्तुति प्रारंभः॥
स्तोष्ये भक्त्या विष्णुमनादिं जगदादिं यस्मिन्नेतत्सं
सृतिचक्रं भ्रमतीत्थम्॥ यस्मिन्दृष्टे नश्यतितत्संसृ-
तिचक्रं तं संसारध्वांतविनाशं हरिमीडे ॥ १ ॥ य-
स्यैकांशादित्थमशेषं जगदेतत् प्रादुर्भूतं येनपिनद्धं
पुनरित्थम्॥येन व्याप्तं येन विबुद्धं सुखदुःखै स्तंसं
सारध्वांतविनाशं हरिमीडे॥२॥सर्वज्ञो यो यश्च हि
सर्वः सकलो यो यश्चानंदोऽनंतगुणो यो गुणधामा॥
यश्चाव्यक्तो व्यस्तसमस्तः सदसद्यस्तं संसारध्वा-
त० ॥३॥ यस्मादन्यंनास्त्यपि नैवं परमार्थं दृश्या-

दन्यो निर्विषयज्ञानमयत्वात्॥ज्ञातृज्ञानज्ञेयविही-
नोपि सदा ज्ञ स्तं संसार० ॥ ४ ॥ आचार्येभ्यो
लब्धसुसूक्ष्माच्युततत्त्वा वैराग्येणाभ्यासवलाच्चैव
द्रढिम्ना ॥ भक्त्यैकाग्रध्यानपरा यं विदुरीशं तंसंसा-
र० ॥५॥ प्राणानायम्योमितिचित्तं हृदि रुध्वा ना-
न्यत्स्मृत्वातत्पुनरत्रैव विलाप्य ॥ क्षीणे चित्ते भाद्द-
शिरस्मीति विदुर्यं तंसंसार० ॥ ६ ॥ यं ब्रह्मारव्यं
देवमनन्यं परिपूर्णं हृत्स्थं भक्तैर्लभ्यमजं सूक्ष्ममत-
र्क्यं ॥ ध्यात्वात्मस्थं ब्रह्मविदो यं विदुरीशं तंसंसा
र० ॥ ७ ॥ मात्रातीतं स्वात्मविकाशात्मविबोधं

ज्ञयेतीतं ज्ञानमयं हृद्युपलभ्यम्।।भावग्राह्यानंदमन
न्यं च विदुर्यं तं संसार० ॥ ८ ॥ यद्यद्वेद्यं वस्तुस
तत्त्वं विषयाख्यं तत्तद्ब्रह्मैवेति विदित्वा तदहं च ॥
ध्यायंत्येवं यं सनकाद्या मुनयोऽजं तं संसार०॥९॥
यद्यद्वेद्यं तत्तदहं नेति विहाय स्वात्मज्योतिर्ज्ञानमया-
नंदमवाप्य ॥ तस्मिन्नस्मीत्यात्मविदो यं विदुरीशं
तं संसार० ॥१०॥ हित्वा हित्वा दृश्यमशेषं सवि
कल्पं मत्वा शिष्टं भादृशिमात्रं गगनाभं ॥ त्यक्त्वा दे
हं यं प्रविशंत्य च्युतभक्ता स्तंसंसार० ॥११॥ सर्व-
त्रास्ते सर्वशरीरी न च सर्वः सर्वं वेत्त्येवेह न यं वेत्ति च

सर्वः॥सर्वत्रांतर्यामितयेत्थं यमयन्य॥स्तं संसार०
॥१२॥सर्वं दृष्ट्वा स्वात्मनि युक्त्या जगदेतद् दृष्ट्वात्मानं
चैवमजं सर्वजनेषु ॥ सर्वात्मैकोऽस्मी तिविदुर्यं जन
हृत्स्थं तं संसार० ॥ १३ ॥ सर्वत्रैकः पश्यति जि
घ्रत्यथ भुंक्ते स्पष्टा श्रोता बुध्यति चेत्याहुरिमं यं ॥
साक्षी चास्ते कर्तृषु पश्यन्निति चान्ये तं संसार०॥
॥१४॥पश्यन् शृण्वन्नत्र विजानन् रसयन्रसन् जि
घ्रन्विभ्रद्देहमिमं जीवतयेत्थं॥इत्यात्मानं यं विदुरीशं
विषयज्ञं तं संसार० ॥ १५ ॥ जाग्रद्दृष्ट्वा स्थूलप
दार्थानथमायां दृष्ट्वा स्वप्नेथापिसुषुप्तौ सुखनिद्रां ॥

इत्यात्मानं वीक्ष्यमुदास्तेचतुरीये तंसंसार०॥१६॥
पश्यन्शुद्धोप्यक्षरएकोगुणभेदान्नानाकारान् स्फा
टिकवद्भातिविचित्रः ॥ भिन्नच्छिन्नश्चायमजःकर्म
फलैर्य स्तंसंसार०॥ १७ ॥ ब्रह्माविष्णूरुद्रहुता-
शौरविचंद्रा विंद्रोवायुर्यज्ञइतीत्थंपरिकल्प्य ॥ एकं
संतंयंबहुधाहुर्मतिभेदा त्तं संसार०॥१८॥ सत्यंज्ञा-
नं शुद्धमनन्तंव्यतिरिक्तं शांतंगूढं निष्कलमानंदम-
नन्यं॥इत्याहादौ यंवरुणोऽसौ भृगवेजं तं संसार०
॥१९॥कोशानेतान्पंचरसादीऽनतिहाय ब्रह्मास्मीति
स्वात्मनिनिश्चित्य हशिस्थः॥ पित्रा दिष्टो वेदभृगुर्यं

यजुरंते तं संसार०॥२०॥येनाविष्टो यस्यचशक्त्या
यदधीनः क्षेत्रज्ञोयं कारयिता जंतुषुकर्त्तुः ॥ कर्त्ता
भोक्तात्माऽत्रहिचिच्छक्त्याधिरूढ स्तंसंसार०॥२१॥
सृष्ट्वासर्वं स्वात्मतयैवेत्थमतर्क्यं व्याप्याथांतःकृत्स्न
मिदंसृष्टमशेषं॥सच्चत्यच्चाभूत्परमात्मासयएक स्तं
संसार० ॥ २२ ॥ वेदांतैश्चाध्यात्मिकशास्त्रैश्चपुरा
णैः शास्त्रैश्चान्यैःसात्वततंत्रैश्चयमीशं ॥ दृष्ट्वाथांत
श्चेतासिबुध्वाविविशुर्यं तं संसार० ॥ २३ ॥ श्रद्धा
भक्तिध्यानशमाद्यैर्यतमानैर्ज्ञातुंशक्योदेवइहैवाशुय
ईशः ॥ दुर्विज्ञेयोजन्मशतैश्चापिविनाते स्तंसंसार॥

॥ २४ ॥ यस्यातर्क्यं स्वात्मविभूतेः परमार्थं सर्वं ख-
ल्वित्यत्र निरुक्तं श्रुतिविद्भिः ॥ तज्जादित्वादब्धितरं-
गाभमभिन्नं तं सार० ॥२५॥ दृष्ट्वा गीतास्वक्षरतत्त्वं
विधिनाजं भक्त्या गुर्व्या लभ्य हृदिस्थं दृशि मात्रं ॥
ध्यात्वा तस्मिन्नस्म्यहमित्यत्र विदुर्यं तं संसार०
॥ २६ ॥ क्षेत्रज्ञत्वं प्राप्य विभुः पंचमुखैर्यो भुंक्तेऽजस्रं
भोग्यपदार्थान् प्रकृतिस्थः ॥ क्षेत्रेक्षेत्रेऽप्स्विदुवदेको
बहुधाऽऽस्ते तं संसार० ॥२७॥ युक्त्यालोड्य व्या-
सवचांस्यत्र हि लभ्यः क्षेत्रक्षेत्रज्ञांतरविद्भिः पुरुषा-
ख्यः ॥ योऽहं सोऽसौ सोऽस्म्यहमेवेति विदुर्यं तं संसा०

॥२८॥एकीकृत्यानेकशरीरस्थमिमं ज्ञं यं विज्ञायेहैः
व स एवाशु भवंति॥ यस्मिँल्लीना नेह पुनर्जन्म लभंते
तं संसार० ॥२९॥ द्वंद्वैकत्वं यच्च मधु ब्राह्मणवाक्यैः
कृत्वा शक्रोपासनमासाद्य विभूत्या॥ योऽसौ सोहं
सोस्म्यहमेवेति विदुर्यं तं संसार ०॥ ३० ॥ योयं
देहे चेष्टयितांतःकरणस्थः सूर्ये चासौ तापयिता सो-
स्म्यहमेव ॥ इत्यात्मैक्योपासनया यं विदुरीशं तं सं-
सार०॥३१॥ विज्ञानांशो यस्य सतः शक्त्यधिरूढो
बुद्धीर्बुध्यत्यत्र बहिर्बोध्यपदार्थान्॥ नैवातस्थं बुध्य-
ति यं बोधयितारं तं संसार०॥३२॥कोयं देहे देव इती

त्थं सुविचार्य ज्ञाता श्रोता नंदयिता चैष हि देवः इत्या-
लोच्य ज्ञांश इहास्मीति विदुर्यं तं संसार० ॥ ३३ ॥
को ह्येवान्यादात्मनि न स्यादयमेष: ह्येवानंदः प्राणि-
ति चापानिति चेति॥इत्यस्तित्वं वक्त्युपपत्त्या श्रुति-
रेषा तंसंसार०॥३४॥प्राणो वाऽहं वाक्श्रवणादीनि
मनो वा बुद्धिर्वाऽहं व्यस्त उताहोऽपि समस्तः॥इत्या-
लोच्य ज्ञप्तिरिहास्मीति विदुर्यं तं संसासार० ३५॥
नाहं प्राणो नैव शरीरं न मनोहं नाहं बुद्धिर्नाहमहंका-
रधियौ च॥योत्र ज्ञांशःसोस्म्यहमेवेति विदुर्यं तं संसा-
र० ॥३६॥ सत्तामात्रं केवलविज्ञानमजं सत् सूक्ष्मं

नित्यं तत्त्वमसीत्यात्मसुताय॥साम्नामंते प्राहपिता यं विभुमाद्यं तं संसार० ॥३७॥ मूर्तामूर्ते पूर्वमपोह्याथ समाधौ दृश्यं सर्वं नेति च नेतीति विहाय॥ चैतन्यांशे स्वात्मनि संतं च विदुर्यं तं संसार० ॥३८॥ ओतं प्रोतं यत्र च सर्वं गगनांतं योऽस्थूलानण्वादिषु सिद्धोऽक्षरसंज्ञः॥ज्ञाताऽतोऽन्यो नेत्युपलभ्यो न च वेद्यस्तं संसार० ॥३९॥ तावत्सर्वं सत्यमिवाभाति यदेतद्यावत्सोऽस्मीत्यात्मनि योज्ञो न हि दृष्टः॥दृष्टे तस्मिन् सर्वमसत्यं भवतीदं तं संसार० ॥ ४० ॥ रागामुक्तं लोहयुतं हेम यथाऽग्नौ योगाष्टांगैरुज्ज्वलितज्ञानम-

थाग्नौ दग्ध्वाऽऽत्मानं ज्ञं परिशिष्टं च विदुर्यं तं संसार० ४१ यं विज्ञानज्योतिषमाद्यं सुविभांतं हृद्यर्केंद्वऽग्न्योकसमीड्यं तडिदाभं॥ भक्त्याऽऽराध्यैहैव विशंत्यात्मनि संतं तं संसार ०॥४२॥ पायाद्भक्तं स्वात्मनि संतं पुरुषं यो भक्त्या स्तौतीत्यांगिरसं विष्णुरिमं मां। इत्यात्मानं स्वात्मनि संहृत्य सदैकस्तं संसार ०॥४३॥ इत्थं स्तोत्रं भक्तजनेड्यं भवभीतिध्वांतार्काभं भगवत्पादीयमिदं यः॥ विष्णोर्लोकं पठति शृणोति व्रजति ज्ञो ज्ञानं ज्ञेयं स्वात्मनि चाप्नोति मनुष्यः॥४४॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य

श्रीमच्छंकराचार्यविरचिता हरिस्तुतिः समाप्ता ॥ ॥ ॥
॥ श्रीसच्चिदानंदाय नमः ॥ श्रीसद्गुरुभ्यो नमः ॥
अथात्मबोधप्रारंभः ॥तपोभिः क्षीणपापानां शांता
नां वीतरागिणां॥मुमुक्षूणामपेक्ष्योयऽमात्मबोधो वि
धीयते॥१॥बोधोन्यसाधनेभ्यो हि साक्षान्मोक्षैक-
साधनं ॥ पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सि-
ध्यति॥२॥अविरोधितया कर्म नाविद्यां विनिवर्त्तये-
त्॥विद्याविद्यां निहंत्येव तेजस्तिमिरसंऽघवत्॥३॥
परिच्छिन्न इवाज्ञाना त्तन्नाशे सति केवलः॥स्वयं प-
काशते ह्यात्मा मेघापायेंशुमानिव॥४॥अज्ञानकलुषं

जीवं ज्ञानाभ्यासाद्धि निर्मलं॥कृत्वाज्ञानं स्वयं नश्ये-
ज्जलं कतकरेणुवत् ॥५॥संसारः स्वप्नतुल्यो हि रा-
गद्वेषादिसंकुलः ॥ स्वकाले सत्यवद्भाति प्रबोधे स-
त्यसद्भवेत्॥६॥तावत्सत्यं जगद्भाति शुक्तिकारज-
तं यथा॥यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयं॥७॥
सच्चिदात्मन्यनुस्यूते नित्ये विष्णौ प्रकल्पिताः॥व्य-
क्तयो विविधाः सर्वा हाटके कटकादिवत्॥८॥यथा-
काशो हृषीकेशो नानोपाधिगतो विभुः॥ तद्भेदाद्भि-
न्नवद्भाति तन्नाशे सति केवलः॥९॥नानोपाधिवशा-
देव जातिवर्णाश्रमादयः ॥ आत्मन्यारोपितास्तोये

रसवर्णादिभेदवत् ॥१० ॥ पंचीकृतमहाभूतऽसंभवं कर्मसंचितं ॥शरीरं सुखदुःखनां भोगायतनमुच्यते ॥११॥ पंचप्राणमनोबुद्धि दशेंद्रियसमन्वितं ॥ अपंचीकृतभूतोत्थं सूक्ष्मांगं भोगसाधनं॥१२॥अनाद्यविद्यानिर्वाच्या कारणोपाधिरुच्यते ॥ उपाधित्रितयादन्यऽमात्मानमवधारयेत्॥१३॥पंचकोशादियोगेनतत्तन्मय इव स्थितः॥शुद्धात्मा नीलवस्त्रादि योगेन स्फटिको यथा॥१४॥वपुस्तुषादिभिः कोशैर्युक्तं युत्त्यावघाततः॥आत्मानमंतरं शुद्धं विविच्यात्तंदुलं यथा॥१५॥सदा सर्वगतोऽप्यात्मा न सर्वत्रावभासते॥

बुद्धावेववाभासेत स्वच्छेपु प्रतिविंबवत् १६ देहेंद्रिय-
मनोबुद्धि प्रकृतिभ्यो विलक्षणं॥तद्वृत्तिसाक्षिणं वि
द्यादात्माऽनंराजवत्सदा १७ व्यापृतेष्विंद्रियेष्वात्मा
व्यापारीवाविवेकिनां॥दृश्यतेभ्रेषु धावत्सु धावन्निव
यथा शशी॥१८॥आत्मचैतन्यमाश्रित्य देहेंद्रियम-
नोधियः॥स्वकीयार्थेपु वर्त्तंते सूर्यालोकं यथा जना-
॥१९॥देहेंद्रियगुणान्कर्माऽण्यमले सच्चिदात्मनि ॥
अध्यस्यंत्यविवेकेन गगने नीलतादिवत्॥२०॥अ-
ज्ञानान्मानसोपाधेः कर्तृत्वादीनिचात्मनि॥कल्प्यं-
तेंबुगते चंद्रे चलनादि यथांभसः ॥२१॥-रागेच्छा

सुखदु:खादि बुद्धौ सत्यां प्रवर्त्तते॥सुषुप्तौ नास्तित-
न्नाशे तस्माद्बुद्धस्तु नात्मनः ॥२२॥ प्रकाशोऽर्कस्य
तोयस्य शैत्यमग्नेर्यथोष्णता॥स्वभाव सच्चिदानंदनि-
त्य निर्मलतात्मः॥२३॥आत्मनःसच्चिदंशश्च बुद्धेर्वृ-
त्तिरिति द्वयं॥संयोज्य चाविवेकेन जानामीति प्रवर्त्तते
२४आत्मनो विक्रिया नास्ति बुद्धेर्बोधो न जात्विति
जीवः सर्वमलं ज्ञात्वा कर्त्ता द्रष्टेति मुह्यति ॥२५॥
रज्जुसर्पवदात्मानं जीवं ज्ञात्वा भयं वहेत्॥नाहं जीवः
परात्मेति ज्ञातं चेन्निर्भयो भवेत्॥२६॥आत्मावभा-
सयत्येको बुध्यादीनींद्रियाणि हि॥ दीपो घटादिव

त्स्वात्मा जडैस्तैर्नावभास्यते॥२७॥ स्वबोधे नान्य-
बोधेच्छ बोधरूपतयात्मनः ॥न दीपस्यान्यदीपेच्छा
यथा स्वात्मा प्रकाशते॥२८॥निषिध्य निखिलोपा-
धीन्नेति नेतीति वाक्यतः॥विद्यादैक्यं महावाक्यैर्जी-
वात्मपरमात्मनोः ॥२९॥ अविद्यकं शरीरादि दृश्यं
बुद्बुदवत् क्षरं॥एतद्विलक्षणं विद्यादहं ब्रह्मेति निर्म-
लं॥३०॥देहान्यत्वान्नमे जन्मजराकार्श्यलयादयः
शब्दादिविषयैःसंगो निरिंद्रियतया न च॥ ३१॥अ-
मनस्त्वान्नमे दुःखरागद्वेषभयादयः॥अप्राणो ह्यम-
नाःशुभ्र इत्यादिश्रुतिशासनात् ॥३२॥निर्गुणो नि-

ष्क्रिया नित्यो निर्विकल्पो निरंजनः॥निर्विकारो नि
राकारो नित्यमुक्तोस्मि निर्मलः॥३३॥अहमाकाश-
वत्सर्वं बहिरंतर्गतोच्युतः॥सदा सर्वसमः शुद्धो निः
संगो निर्मलोचलः ॥३४॥ नित्यशुद्धविमुक्तैकमखं
डानंदमद्वयं॥सत्यं ज्ञानमनंतं यत् परं ब्रह्माहमेव तत्
त्॥३५॥ एवं निरंतराभ्यस्ता ब्रह्मैवास्मीति वास-
ना॥हरत्यविद्या विक्षेपान् रोगानिव रसायनं॥३६॥
विविक्तदेश आसीनो विरागो विजितेंद्रियः ॥भाव-
येदेकमात्मानं तमनंतमनन्यधीः॥३७॥ आत्मन्ये-
वाखिलं दृश्यं प्रविलाप्य धिया सुधीः॥भावयेदेक

मात्मानं निर्मलाकाशवत्सदा ॥३८॥ रूपवर्णादिकं सर्वं विहाय परमार्थवित् ॥परिपूर्णचिदानंदस्वरूपे-णावतिष्ठते॥ ३९ ॥ज्ञातृज्ञानज्ञेयभेदः परात्मनि न विद्यते ॥ चिदानंदैकरूपत्वाद्दीप्यते स्वयमेव हि ॥ ॥४०॥एवमात्मारणौ ध्यानमथने सततं कृते॥उदि-तावगतिर्ज्वाला सर्वाज्ञानेंधनं दहेत् ॥ ४१ ॥ अरु-णेनेव बोधेन पूर्वसंतमसे हृते ॥तत आविर्भवेदात्मा स्वयमेवांशुमानिव ॥४२॥ आत्मा तु सततं प्राप्तो-प्यप्राप्तवदविद्यया॥तन्नाशे प्राप्तवद्भाति स्वकंठाभ-रणं यथा॥४३॥स्थाणौ पुरुषवद्भ्रांत्या कृताब्रह्मणि

जीवता॥जीवस्य तात्विके रूपे तस्मिन् दृष्टे निवव-
र्त्तते॥४४॥तत्त्वस्वरूपानुभवादुत्पन्नं ज्ञानमंजसा ॥
अहंममेति चाज्ञानं बाधते दिग्भ्रमादिवत् ॥४५॥
सम्यग्विज्ञानवान् योगी स्वात्मन्येवाखिलं स्थितं ॥
एकं च सर्वमात्मान दीक्षते ज्ञानचक्षुपा ॥४६॥आ
त्मैवेदं जगत्सर्वमात्मनोन्यन्न विद्यते ॥ मृदो यद्वद्घ-
टादीनि स्वात्मानं सर्वमीक्षते॥४७॥जीवन् मुक्तस्तु
तद्विद्वान् पूर्वोपाधिगुणांस्त्यजेत् ॥ स च्चिदानंदरूप
त्वा द्भवेद्भ्रमरकीटवत्॥४८॥ तीर्त्वा मोहार्णवं हत्वा
रागद्वेषादिराक्षसान्॥योगी शांतिसमायुक्तो ह्यात्मा

रामो विराजते ॥४९॥ उपाधिस्थोपि तद्धर्मैर्नलिप्तो
व्योमवन्मुनिः॥सर्वविन्मूढवत्तिष्ठे दसक्तो वायुवच्चरेत्
॥५०॥बाह्यानित्यसुखासक्तिं हित्वात्मसुखनिर्वृतः॥
घटस्थदीपवत्स्वच्छः स्वांतरेव प्रकाशते ॥ ५१ ॥
उपाधिविलयाद्विष्णौ निर्विशे षंविशेन्मुनिः॥जले
जलं वियद्व्योम्नि तेजस्तेजसिवा यथा ॥५२॥ य-
ल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखं॥यज्ज्ञा-
नान्नापरं ज्ञानं तद्ब्रह्मेत्यवधारयेत् ॥५३॥ यद्दृष्ट्वा
नपरं दृश्यं यद्भूत्वा न पुनर्भवः ॥ यज्ज्ञात्वा न परंज्ञेयं
तद्ब्रह्मेत्यवधारयेत् ॥५४॥ तिर्यगूर्ध्वमधःपूर्णं स

त्चिदानंदमव्ययम् ॥ अनंतं नित्यमेकं यत्तद्ब्रह्मेत्य-
वधारयेत् ॥५५॥ अतद्व्यावृत्तिरूपेण वेदांतैर्लक्ष्यते
व्ययं ॥ अखंडानंदमेकं यत्तद्ब्रह्मेत्यवधारयेत्॥५६॥
अखंडानंदरूपस्य तस्यानंदलवाश्रिताः ॥ ब्रह्माद्या-
स्तास्तस्येन भवस्यानंदिनोऽखिलाः॥५७॥तद्युक्त-
मखिलं वस्तु व्यवहारस्तदान्वितः ॥ तस्मात्सर्वगतं
ब्रह्म क्षीरे सर्पिरिवाखिले॥५८॥अनण्वस्थूलमन्ह-
स्व मदीर्घमजमव्ययं ॥ अरूपगुणवर्णाख्यं तद्ब्रह्मे
त्यवधारयेत् ॥५९॥ यद्भासा भासतेर्कादि भांस्यैर्य
त्तुन भास्यते॥येन सर्वमिदं भाति तद्ब्रह्मेत्यवधारयेत्

॥६०॥ स्वयमंतर्वहिर्व्याप्य भासयन्नखिलं जगत्॥
ब्रह्म प्रकाशते वन्हि प्रतप्तायसपिंडवत्॥ ६१ ॥ ज
गद्विलक्षणं ब्रह्म ब्रह्मणोन्यन्नकिंचन॥ ब्रह्मान्यद्भाति
चेन्मिथ्या यथा मरुमरीचिका ॥ ६२ ॥ दृश्यतेश्रू-
यते यद्यद्ब्रह्मणो न्यन्नतद्भवेत्॥ तत्त्वज्ञानाच्चऽतब्रह्म
सच्चिदानंदमद्वयं ॥६३॥सर्वगं सच्चिदात्मानं ज्ञानच
क्षुर्निरीक्षते॥अज्ञानचक्षुर्नेक्षेत भास्वंतं भानुमंधवत्
॥६४॥ श्रवणादिभिरुद्दीप्तो ज्ञानाग्निपरितापित:॥
जीव:सर्वमलान्मुक्त: स्वर्णवद्द्योतते स्वयं ॥६५॥
हृदाकाशोदितो ह्यात्मा बोधभानुस्तमोऽपहृत् ॥

सर्वव्यापी सर्वधारी भाति सर्वं प्रकाशते ॥ ६६ ॥
दिग्देशकालाद्यनपेक्ष्य सर्वगं शीतादिहृन्नित्यसुखं
निरंजनं॥ यः स्वात्मतीर्थं भजतेविनिष्क्रियः स सर्व
वित्सर्वगतोऽमृतोभवेत् ॥ ६७ ॥ इतिश्रीमत्परम
हंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यकृतआत्मबो
धःसमाप्तः ॥ ॥ शुभं भवतु ॥

श्रीगणेशायनमः॥वेदो नित्यमधीयतां तदुदितंकर्म
स्वनुष्ठीयतांते ने शस्यविधीता मपचितिःकाम्येम
तिस्त्यज्यतां ॥ पापौघःपरिधूयतां भवसुखे दोषोनु
संधीयता मात्मेच्छाव्यवसीयतां निजगृहात्तूर्णंविनि

र्गम्यताम्॥१॥संगः सत्सुविधीयतां भगवतो भक्ति
र्दृढाधीयतां शांत्यादिःपरिचियतांदृढतरं कर्माशुसं
त्यज्यतां॥ सद्विद्यानुपसर्प्यतांप्रतिदिनं तत्पादुकेसे
व्यतां ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरो वाक्यंसमाक
र्ण्यतां॥२॥ वाक्यार्थश्चविचार्यतां श्रुतिशिरःपक्षःस
माश्रीयतांदुस्तर्कात्सुविरम्यतां श्रुतिमतस्तर्कोनुसं
धीयतां॥ब्रह्मै वास्मि विभाव्यता महरहो गर्वः परि
त्यज्यतां देहेहं मतिरुज्झतां बुधजनैर्वादःपरित्यज्य
ताम्॥३॥क्षुद्व्याधिश्चचिकित्स्यतां प्रतिदिनंभिक्षौ
षधंभुज्यतांस्वाद्वन्नं नतु याच्यतां विधिवशात्प्राप्तेन
संतुष्यतां॥शीतोष्णादिविषह्यतां नतुवृथा वाक्यंस-

मुच्चार्यतां मौदासीन्यमभीप्स्यतां जनकृपा नैष्ठुर्यमु
त्सृज्यताम्॥४॥ एकांते सुखमास्यतां परतरे चेतःस-
माधीयतां पूर्णात्मासुसमीक्ष्यतां जगदिदं तद्बाधितं दृ-
श्यतां प्राक्कर्मप्रविलाप्यतां चितिबलान्नाप्युत्तरैःश्लि-
ष्यतां प्रारब्धं त्विहभुज्यता मथपरंब्रम्हात्मनास्थी
यतां॥५॥ यःश्लोकपंचकमिदं पठते मनुष्यः संचिंत
यत्यनु दिनं स्थिरता मुपेत्य॥तस्याशुसंसृतिदवानल-
तीव्र घोर तापःप्रशांति मुपयाति चितिप्रसादात्॥६॥
इति श्रीमच्छंकराचार्यविरचितंसाधनपंचकंसंपूर्णम्
श्रीगणेशायनमः॥श्रीभगवानुवाच॥ज्ञानं परमगुह्यं

मे यद्विज्ञानसमन्वितम्॥सरहस्यंतदंगंच गृहाणगदि
तं मया॥१॥यावानहं यथाभावो यद्रूपगुणकर्मकः॥
तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात्॥२॥अहमेवा
समेवाऽग्रे नान्यद्यत्सदसत्परं॥पश्चादहं यदेतच्चयोऽव
शिष्येतसोऽस्म्यहम्॥३॥ऋतेऽर्थंयत्प्रतीयेत न प्रती
येतचात्मनि॥ तद्विद्यादात्मनो मायांयथा भासो य-
थातमः॥४॥यथा महांति भूतानि भूतेषूच्चावचेष्वनु॥
प्रविष्टान्य प्रविष्टानि तथा तेषु न तेष्वहं॥५॥एताव
देव जिज्ञास्यं तत्त्वजिज्ञासुनाऽत्मनः॥अन्वयव्यतिरे
काभ्यां यत्स्यात्सर्वत्रसर्वदा ॥६॥ एतन्मतं समाति

ष्ट परमेण समाधिना॥भवान्कल्पविकल्पेषु न विमु
ह्यतिकर्हिचित् ॥७॥ इति श्रीभागवते महापुराणेऽ
ष्टादशसाहस्र्यांसंहितायांवैय्यासिक्यांद्वितीयस्कंधे
भगवद्ब्रह्मसंवादे चतुःश्लोकीभागवतंसमाप्तम् ॥
गुरुर्नसस्यात्स्वजनोनसस्या त्पितानसस्याज्जननी
नसास्यात् ॥ दैवंनतत्स्यान्नपतिश्चसस्यान्नमोच
येद्यः समुपेतमृत्युं ॥ १ ॥ नीरक्षीरनयेनतथ्यावितथे
संपिंडितेपंडितै र्दुर्बोधेसकलैर्विवेचयतियः श्रीशंक
राख्योमुनिः ॥ हंसोयंपरमोस्तुयेपुनरिहाशक्तास्स
मस्ताःस्थिताजृंभान्निंवफलाशनैकरसिकान्काका

नमून्मन्महे ॥१॥ कपिलपतंजलिगौतमकणभूक्
प्रमुखाःक्षमांमयिकुरुध्वं ॥ स्वधनंभवत्सुमोहाच्छु
तिगंविस्मृत्यशोधितंमुधा ॥ १ ॥ समाप्तम् ॥

इदं पुस्तकं पण्डित ज्येष्ठरामात्मज रविशंकरेण
गुजराती मुद्रणालये मुद्रितम् ॥

शके १८२३ संवत १९५७

पण्डित नारायणमूलजी
कालबादेविरोड रामवाडी एतेषां पुस्तकालये लभ्येत.

॥इति वेदांतस्तोत्रसंग्रह समाप्तः॥

## ॥ अथ श्रीशिवगीता प्रारभ्यते ॥

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीगुरुभ्यो नमः ॥ श्रीसाम्बसदाशिवाय नमः ॥ ॐअस्य श्रीशिवगीतामालामन्त्रस्य ॥ श्रीवेदव्यासरूप्यगस्त्य ऋषिः शिरसि ॥ ॐजगती छन्दः मुखे ॥ श्रीसदाशिवः परमात्मा देवता हृदये ॥ ॐप्रणवो बीजं नाभौ ॥ ॐसर्वव्यापक इति शक्तिः गुह्ये ॥ ॐह्रीं कीलकं पादयोः ॥ ब्रह्मात्मसाक्षात्कारार्थे जपे विनियोगः ॥ ॐ ह्रां अङ्गुष्ठाभ्यां नमः ॥ ॐह्रीं तर्जनीभ्यां नमः ॥ ॐह्रूं मध्यमाभ्यां नमः ॥ ॐह्रैं अनामिका-

भ्यां नमः ॥ ॐ ह्रौं कनिष्ठिकाभ्यां नमः ॥ ॐ ह्रः क-
रतलकरपृष्ठाभ्यां नमः ॥ एवं हृदयादि ॥ ॥ अथ
ध्यानम् ॥ ॥ अकारं विन्यसेन्नाभौ सत्वरूपं निर-
ञ्जनम् ॥ उकारं हृदये विन्द्याद्रजोरूपं द्वितीयकम् ॥
॥ १ ॥ मकारं मूर्ध्नि विन्यस्य तमोरूपं च त्र्यम्बक-
म् ॥ अकारश्च उकारश्च मकारो बिन्दुलक्षणः ॥२॥
त्रिधा मात्रा स्थिता यत्र तत्परंज्योतिरोमिति ॥ अ-
कार उच्यते रुद्रो मकारश्च पितामहः ॥ ३ ॥ उ-
कार उच्यते विष्णुस्तत्परं ज्योतिरोमिति ॥ इच्छा
क्रिया तथा शक्तिर्ब्राह्मी गौरी च वैष्णवी ॥ ४ ॥ त्रि-

धा शक्तिः स्थिता यत्र तत्परं ज्योतिरोमिति ॥ ब्रह्मा
विष्णुश्च रुद्रश्च देवेन्द्रो देवतास्तथा ॥ ५ ॥ अमला-
र्कस्थिराकारं प्रज्वलं भुवनत्रयम् ॥ धारयन् हृदये
ब्रह्म वन्हिना सह दृश्यते ॥६॥ दृशिस्वरूपं गगनो-
पमं परं सर्वात्मकं सात्विकमेकमक्षरम् ॥ अलेपनं सं-
र्वगतं यदद्वयं तदेव चाहं प्रणवं यदुक्तम् ॥ ७ ॥ ओ-
मिति ॥ उत्पन्नात्मावबोधस्य अद्वेष्टृत्वादयो गुणाः ॥
अशेषतो भवन्त्यस्य ननु संधानरूपिणः ॥ ८ ॥
इति ध्यानम् ॥ ॥ सूत उवाच ॥ ॥ अथातः सं-
प्रवक्ष्यामि शुद्धं कैवल्यमुक्तिदम् ॥ अनुग्रहान्महेश-

स्य भवदुःखस्य भेषजम् ॥ १ ॥ न कर्मणामनुष्ठानैर्न
दानैस्तपसापि वा ॥ कैवल्यं लभते मर्त्यः किंतु ज्ञा-
नेन केवलम् ॥ २ ॥ रामाय दण्डकारण्ये पार्वती-
पतिना पुरा ॥ या प्रोक्ता शिवगीताख्या गुह्याद्गु-
ह्यतमा हि सा ॥३॥ यस्याः श्रवणमात्रेण नृणां मु-
क्तिर्ध्रुवं भवेत् ॥ पुरा सनत्कुमाराय स्कन्देनाभिहि-
ता हि सा ॥ ४ ॥ सनत्कुमारः प्रोवाच व्यासाय मु-
निसत्तमाः ॥ मह्यं कृपातिरेकेण प्रददौ बादरायणः
॥५॥ उक्तं च तेन कस्मैचिन्न दातव्यमिदं त्वया ॥ सू-
तपुत्रान्यथा देवाः क्षुभ्यन्ति च शपन्ति च ॥६॥ अथ

पृष्टो मया विप्रा भगवान्बादरायणः ॥ भगवन्देवताः सर्वाः किं क्षुभ्यन्ति शपन्ति च ॥७॥ तासामत्रास्ति का हानिर्यया कुप्यन्ति देवताः ॥ पाराशर्योऽथ मामाह यत्पृष्टं शृणु वत्स तत् ॥८॥ नित्याग्निहोत्रिणो विप्राः संति ये गृहमेधिनः ॥ त एव सर्वफलदाः सुराणां कामधेनवः ॥९॥ भक्ष्यं भोज्यं च पेयं च यद्यदिष्टं सुपर्वणाम् ॥ अग्नौ हुतेन हविषा तत्सर्वं लभते दिवि ॥१०॥ नान्यदस्ति सुरेशानामिष्टसिद्धिप्रदं दिवि ॥ दोग्ध्री धेनुर्यथा नीता दुःखदा गृहमेधिनाम् ॥ ११ ॥ तथैव ज्ञानवान्विप्रो देवानां दुःखदो भवेत् ॥ त्रिद-

शास्तेन विघ्नन्ति प्रविष्टा विषयं नृणाम् ॥१२॥ ततो-
न जायते भक्तिः शिवे कस्यापि देहिनः ॥ तस्मादवि-
दुषां नैव जायते शूलपाणिनः ॥ १३ ॥ यथाकथंचि-
ज्जातापि मध्ये विच्छिद्यते नृणाम् ॥ जातं वापि शिव-
ज्ञानं न विश्वासं भजत्यलम् ॥१४॥ ॥ ऋषय ऊचुः ॥
यद्येवं देवता विघ्नमाचरन्ति तनूभृताम् ॥ पौरुषं तत्र
कस्यास्ति येन मुक्तिर्भविष्यति ॥१५॥ सत्यं सूतात्म-
ज ब्रूहि तत्रोपायोऽस्ति वा न वा ॥ ॥ सूत उवाच ॥
कोटिजन्मार्जितैः पुण्यैः शिवे भक्तिः प्रजायते ॥१६॥
इष्टापूर्तादिकर्माणि तेनाचरति मानवः ॥ शिवार्पण-

धिया कामान्परित्यज्य यथाविधि ॥ १७॥ अनुग्र-
हात्तेन शंभोर्जायते सुदृढो नरः ॥ ततो भीताः पलाय-
न्ते विघ्नं हित्वाऽसुरेश्वराः ॥१८॥ जायते तेन शुश्रूषा
चरिते चन्द्रमौलिनः ॥ शृण्वतो जायते ज्ञानं ज्ञानादे-
व विमुच्यते ॥ १९ ॥ बहुनात्र किमुक्तेन यस्य भक्तिः
शिवे दृढा ॥ महापापोपपापौघकोटिग्रस्तोऽपि मु-
च्यते ॥ २० ॥ अनादरेण शाठ्येन परिहासेन माय-
या ॥ शिवभक्तिरतश्चेत्स्यादन्त्यजोऽपि विमुच्यते ॥
॥ २१ ॥ एवं भक्तिश्च सर्वेषां सर्वदा सर्वतोमुखी ॥
तस्यां तु विद्यमानायां यस्तु मर्त्यो न मुच्यते ॥ २२॥

संसारबन्धनात्तस्मादन्यः को वास्ति मूढधीः ॥ निय-
माद्यस्तु कुर्वीत भक्तिं वा द्रोहमेव वा ॥२३ ॥ तस्या-
पि चेत्प्रसन्नोऽसौ फलं यच्छति वाञ्छितम् ॥ ऋद्धं
किंचित्समादाय क्षुल्लकं जलमेव वा ॥ २४ ॥ यो दत्ते
नियमेनासौ तस्मै दत्ते जगत्त्रयम् ॥ तत्राप्यशक्तो नि-
यमान्नमस्कारं प्रदक्षिणाम् ॥२५॥ यः करोति महे-
शस्य तस्मै तुष्टो भवेच्छिवः ॥ प्रदक्षिणास्वशक्तो-
ऽपि यः स्वान्ते चिन्तयेच्छिवम् ॥२६ ॥ गच्छन्समुप-
विष्टो वा तस्याभीष्टं प्रयच्छति॥ चन्दनं बिल्वकाष्ठस्य
पुष्पाणि वनजान्यपि ॥२७॥ फलानि तादृशान्ये-

व यस्य प्रीतिकराणि वै ॥ दुष्करं तस्य सेवायां कि-
मस्ति भुवनत्रये ॥ २८ ॥ वन्येषु यादृशी प्रीतिर्वर्त-
ते परमेशितुः ॥ उत्तमेष्वपि नास्त्येव तादृशी ग्राम-
जेष्वपि ॥ २९ ॥ तं त्यक्त्वा तादृशं देवं यः सेवेतान्य-
देवताम्॥स हि भागीरथीं त्यक्त्वा काङ्क्षते मृगतृष्णि-
काम् ॥३०॥ किंतु यस्यास्ति दुरितं कोटिजन्मसु सं-
चितम् ॥ तस्य प्रकाशते नायमर्थो मोहान्धचेतसः
॥३१ ॥ न कालनियमो यत्र न देशस्य स्थलस्य च ॥
यत्रास्य चित्तं रमते तस्य ध्यानेन केवलम् ॥ ३२ ॥
आत्मत्वेन शिवस्यासौ शिवसायुज्यमाप्नुयात् ॥ अ-

तिस्वल्पतरायुःश्रीर्भूतेशांशाधिपोऽपि यः ॥३३॥ स
तु राजाहमस्मीति वादिनं हन्ति सान्वयम् ॥ कर्तापि
सर्वलोकानामक्षय्यैश्वर्यवानपि ॥ ३४ ॥ शिवः शि-
वोऽहमस्मीति वादिनं यं च कश्चन ॥ आत्मना सह
तादात्म्यभागिनं कुरुते भृशम् ॥ ३५ ॥ धर्मार्थका-
ममोक्षाणां पारं यास्यथ येन वै ॥ मुनयस्तत्रव-
क्ष्यामि व्रतं पाशुपताभिधम् ॥३६ ॥ कृत्वा तु विरजां
दीक्षां भूतिरुद्राक्षधारिणः ॥ जपन्तो वेदसाराख्यं
शिवनामसहस्रकम् ॥ ३७ ॥ संत्यज्य तेन मर्त्यत्वं
शैवीं तनुमवाप्स्यथ ॥ ततः प्रसन्नो भगवाञ्छंकरो

लोकशंकरः ॥ ३८ ॥ भवतां दृश्यतामेत्य कैवल्यं वः प्रदास्यति ॥ रामाय दण्डकारण्ये यत्प्रादात्कुम्भसंभवः ॥ ३९ ॥ तत्सर्वं वः प्रवक्ष्यामि शृणुध्वं भक्तियोगिनः ॥ ४० ॥

॥ इति श्रीपद्मपुराणे उपरिभागे शिवगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे शिवराघवसंवादे शिवभक्त्युत्कर्षनिरूपणं नाम प्रथमोऽध्यायः ॥ १ ॥

॥ ऋषय ऊचुः ॥ ॥ किमर्थमागतोऽगस्त्यो राम-

चन्द्रस्य सन्निधिम् ॥ कथं वा विरजां दीक्षां कारया-
मास राघवम् ॥ ततः किमाप्तवान् रामः फलं तद्वक्तु-
मर्हसि ॥ १ ॥ सूत उवाच ॥ ॥ रावणेन यदा सी-
ताऽपहृता जनकात्मजा ॥ तदा वियोगदुःखेन विल-
पन्नास राघवः ॥ २ ॥ निर्निद्रो निरहंकारो निराहारो
दिवानिशम् ॥ मोक्तुमैच्छत्ततः प्राणान्सानुजो रघु-
नन्दनः ॥ ३ ॥ लोपामुद्रापतिर्ज्ञात्वा तस्य सन्निधि-
मागमत् ॥ अथ तं बोधयामास संसारासारतां मुनिः
॥४॥ अगस्त्य उवाच ॥ ॥ किं विषीदसि राजेन्द्र
कान्ता कस्य विचार्यताम् ॥ जडः किं नु विजानाति

देहोऽयं पाञ्चभौतिकः ॥५॥ निर्लेपः परिपूर्णश्च स-
च्चिदानन्दविग्रहः ॥ आत्मा न जायते नैव म्रियते
न च दुःखभाक् ॥ ६ ॥ सूर्योऽसौ सर्वलोकस्य चक्षु-
ष्ट्वेन व्यवस्थितः ॥ तथापि चाक्षुषैर्दोषैर्न कदाचिद्वि-
लिप्यते ॥ ७ ॥ सर्वभूतान्तरात्मापि तद्वद्दृश्यैर्न लि-
प्यते ॥ देहोऽपि मलपिण्डोऽयं मुक्तजीवो जडात्म-
कः ॥ ८ ॥ दह्यते वन्हिना काष्ठैः शिवाद्यैर्भक्ष्यतेऽपि
वा ॥ तथापि नैव जानाति विरहे तस्य का व्यथा ॥
॥ ९ ॥ सुवर्णगौरी दूर्वाया दलवच्छ्यामलापि वा ॥
पीनोत्तुङ्गस्तनाभोगभुग्नसूक्ष्मविलग्निका ॥ १० ॥ दृ-

हन्नितम्बजघना रक्तपादसरोरुहा ॥ राकाचन्द्रमु-
खी विम्बप्रतिविम्बरदच्छदा ॥११॥ नीलेन्दीवर-
नीकाशनयनद्वयशोभिता ॥ मत्तकोकिलसल्लापा
मत्तद्विरदगामिनी ॥१२॥ कटाक्षैरनुगृह्णाति मां प-
ञ्चेषुशरोत्तमैः ॥ इति यां मन्यते मूढः स तु पञ्चेषुशा-
सितः ॥१३॥ तस्याविवेकं वक्ष्यामि शृणुष्वावहितो
नृप ॥ न च स्त्री न पुमानेष नैव चायं नपुंसकः ॥१४॥
अमूर्तः पुरुषः पूर्णो द्रष्टा देही स जीविनः ॥ या त-
न्वङ्गी मृदुर्बाला मलपिण्डात्मिका जडा ॥१५॥ सा
न पश्यति यत्किंचिन्न शृणोति न जिघ्रति ॥ चर्ममा-

त्रा तनुस्तस्या बुध्वा त्यक्षस्व राघव ॥ १६ ॥ या
प्राणादधिका सैव हंत ते स्याद्घृणास्पदम् ॥ जायन्ते
यदि भूतेभ्यो देहिनः पाञ्चभौतिकाः ॥ १७ ॥ आ-
त्मा यदेकलस्तेषु परिपूर्णः सनातनः ॥ का कान्ता
तत्र कः कान्तः सर्वे एव सहोदराः ॥१८॥ निर्मितायां
गृहावल्यां तदवच्छिन्नतां गतम् ॥ नभस्तस्यां तु द-
ग्धायां न कांचित्क्षतिमृच्छति ॥ १९ ॥ तद्वदात्मापि
देहेषु परिपूर्णः सनातनः ॥ हन्यमानेषु तेष्वेव स
स्वयं नैव हन्यते ॥ २० ॥ हन्ता चेन्मन्यते हन्तुं ह-
तश्चेन्मन्यते हतम् ॥ तावुभौ न विजानीतो नायं

हन्ति न हन्यते ॥ २१ ॥ अस्मान्नृपातिदुःखेन किं खेदस्यास्ति कारणम् ॥ स्वस्वरूपं विदित्वेदं दुःखं त्यक्त्वा सुखी भव ॥२२॥ ॥ राम उवाच ॥ ॥ मुने देहस्य नो दुःखं नैव चेत्परमात्मनः ॥ सीतावियोगदुःखाग्निर्मां भस्मीकुरुते कथम् ॥ २३ ॥ सदाऽनुभूयते योऽर्थः स नास्तीति त्वयेरितः ॥ जायतां तत्र विश्वासः कथं मे मुनिपुङ्गव ॥ २४ ॥ अन्योऽत्र नास्ति को भोक्ता येन जन्तुः प्रतप्यते ॥ सुखस्य वापि दुःखस्य तद्ब्रूहि मुनिसत्तम ॥ २५ ॥ ॥ अगस्तिरुवाच ॥ ॥ दुर्ज्ञेया शांभवी माया तया संमोह्यते ज-

गत् ॥ मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥
॥ २६ ॥ तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥
सत्यज्ञानात्मकोऽनन्तो विभुरात्मा महेश्वरः ॥ २७॥
तस्यैवांशो जीवलोके हृदये प्राणिनां स्थितः ॥ वि-
स्फुलिङ्गा यथा वन्हेर्जायन्ते काष्ठयोगतः ॥ २८ ॥
अनादिकर्मसंबद्धास्तद्वदंशा महेशितुः ॥ अनादिवा-
सनायुक्ताः क्षेत्रज्ञा इति ते स्मृताः ॥ २९ ॥ मनो बु-
द्धिरहंकारश्चित्तं चेति चतुष्टयम् ॥ अन्तःकरणमि-
त्याहुस्तत्र ते प्रतिबिम्बिताः ॥ ३० ॥ जीवत्वं प्रा-
प्नुयुः कर्मफलभोक्तार एव ते ॥ ततो वैषयिकं तेषां-

सुखं वा दुःखमेव वा ॥३१॥ त एव भुञ्जते भोगा-
यतनेऽस्मिन् शरीरके ॥ स्थावरं जङ्गमं चेति द्विवि-
धं वपुरुच्यते ॥ ३२ ॥ स्थावरास्तत्र देहाः स्युः सू-
क्ष्मा गुल्मलतादयः ॥ अण्डजाः स्वेदजास्तद्वदुद्भि-
ज्जा इति जङ्गमाः ॥ ३३ ॥ योनिमन्ये प्रपद्यन्ते श-
रीरत्वाय देहिनः ॥ स्थाणुमन्येऽनुसंयन्ति यथाकर्म
यथाश्रुतम् ॥ ३४ ॥ सुख्यहं दुःख्यहं चेति जीव ए-
वाभिमन्यते ॥ निर्लेपोऽपि परं ज्योतिर्मोहितः शं-
भुमायया ॥ ३५ ॥ कामः क्रोधस्तथा लोभो मदो
मात्सर्यमेव च ॥ मोहश्चेत्यरिषड्वर्गमहंकारगतं विदुः

॥३६॥ स एव वोध्यते जीवः स्वप्नजाग्रदवस्थयोः ॥
सुषुप्तौ तदभावाच्च जीवः शंकरतां गतः॥३७॥ स एव
मायासंस्पृष्टः कारणं सुखदुःखयोः ॥ शुक्तौ रजत-
वद्विश्वं मायया दृश्यते शिवे ॥३८॥ ततो विवेकज्ञा-
नेन न कोऽप्यत्रास्ति दुःखभाक् ॥ ततो विरम दुः-
खात्त्वं किं मुधा परितप्यसे ॥ ३९ ॥ ॥ श्रीराम उ-
वाच ॥ ॥ मुने सर्वमिदं तथ्यं यन्मदग्रे त्वयेरित-
म् ॥ तथापि न जहात्येतत्प्रारब्धादृष्टमुल्बणम् ॥
॥ ४० ॥ मत्तं कुर्याद्यथा मद्यं नष्टाविद्यमपि द्विज-
म् ॥ तद्वत्प्रारब्धभोगोऽपि न जहाति विवेकिनम्

॥ ४१ ॥ ततः किं बहुनोक्तेन प्रारब्धसचिवः स्मरः ॥
बाधते मां दिवारात्रमहंकारोऽपि तादृशः ॥ ४२ ॥
अत्यन्तपीडितो जीवः स्थूलदेहं विमुञ्चति ॥ तस्मा-
ज्जीवाप्तये मह्यमुपायः क्रियतां द्विज ॥ ४३ ॥

॥ इति श्रीपद्मपुराणे उपरिभागे शिवगीता-
सूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे शिवराघ-
वसंवादे वैराग्योपदेशो नाम द्वितीयोऽध्या-
यः ॥ २ ॥

॥ अगस्त्य उवाच ॥ ॥ न गृह्णाति वचः पथ्यं

कामक्रोधादिपीडितः ॥ हितं न रोचते तस्य मुमूर्षो-
रिव भेषजम् ॥ १ ॥ मध्येसमुद्रं या नीता सीता दै-
त्येन मायिना ॥ आयास्यति नरश्रेष्ठ सा कथं तव
संनिधिम् ॥ २ ॥ बध्यन्ते देवताः सर्वा द्वारि मर्कट-
यूथवत् ॥ किं च चामरधारिण्यो यस्य संति सुरा-
ङ्गनाः ॥ ३ ॥ भुङ्क्ते त्रिलोकीमखिलां यः शंभुवरद-
र्पितः ॥ निष्कण्टकं तस्य जयः कथं तव भविष्य-
ति ॥ ४ ॥ इन्द्रजिन्नाम पुत्रो यस्तस्यास्तीशवरोद्ध-
तः ॥ तस्याग्रे संगरे देवा बहुवारं पलायिताः ॥ ५ ॥
कुम्भकर्णाह्वयो भ्राता यस्यास्ति सुरसूदनः ॥ अ-

तिष्ठते ॥ ३९ ॥ जाग्रत्कर्मक्षयवशात्स्वप्नभोग उप-
स्थिते ॥ बोधावस्थां तिरोधाय देहाद्याश्रयलक्षणा-
म् ॥ ४० ॥ कर्मोद्भावितसंस्कारस्तत्र स्वप्नरिरंसया ॥
अवस्थां च प्रयात्यन्यां मायावीवात्ममायया ॥४१॥
घटादिविषयान्सर्वान्बुद्ध्यादिकरणानि च ॥ भूता-
नि कर्मवशतो वासनामात्रसंस्थितान् ॥ ४२ ॥ एता-
न् पश्यन् स्वयंज्योतिः साक्ष्यात्मा व्यवतिष्ठते ॥
अत्रान्तःकरणादीनां वासनाद्वासनात्मता ॥ ४३ ॥
वासनामात्रसाक्षित्वं तेन तत्र परात्मनः ॥ वासना-
भिः प्रपञ्चोऽत्र दृश्यते कर्मचोदितः ॥ ४४ ॥ जाग्र-

द्रूमौ यथा तद्वत्कर्तृकर्मक्रियात्मकः ॥ निःशेषवृद्धि-
साक्ष्यात्मा स्वयमेव प्रकाशते ॥ ४५ ॥ वासनामात्र-
साक्षित्वं साक्षिणः स्वाप उच्यते ॥ भूतजन्मनि य-
द्भूतं कर्म तद्वासनावशात् ॥ ४६ ॥ नेदीयस्त्वाद्व-
यस्याद्ये स्वप्नं प्रायः प्रपश्यति ॥ मध्ये वयसि
कार्कश्यात्करणानामिहार्जितः ॥ ४७ ॥ वीक्षते प्रा-
यशः स्वप्नं वासनाकर्मणोर्वशात् ॥ यियासुः परलो-
कं तु कर्म विद्यादिसंभृतम् ॥४८॥ भाविनो जन्मनो
रूपं स्वप्न आत्मा प्रपश्यति ॥ यद्वत्प्रपतनाच्छ्येनः
श्रान्तो गगनमण्डले ॥ ४९ ॥ आकुञ्च्य पक्षौ यतते

नीडे निःशयनायने ॥ एवं जाग्रत्स्वप्नभूमौश्रन्ता-
आत्माभिसंचरन् ॥५०॥ आपीतकरणग्रामः कारणे
नैति चैकताम् ॥ नाडीमार्गैरिन्द्रियाणामाकृष्यादाय
वासनाम् ॥५१॥ सर्वं ग्रसित्वा कार्यं च विज्ञानात्मा
प्रलीयते ॥ ईश्वराख्येऽव्याकृतेऽथ यथा सुखमयो भ
वेत् ॥ ५२ ॥ कृत्स्नप्रपञ्चविलयस्तथा भवति चात्म-
नः ॥ योषितः काम्यमानायाः संभोगान्ते यथासुख-
म् ॥ ५३ ॥ स आनन्दमयो बाह्यो नान्तरः केवलं
यथा ॥ प्राज्ञात्मतां समासाद्य विज्ञानात्मा तथैव
सः ॥ ५४ ॥ विज्ञानात्मा कारणात्मा तथा तिष्ठंस्त-

थापि सः ॥ अविद्यासूक्ष्मवृत्त्यानुभवत्येव सुखं य-
था ॥५५॥ अज्ञानमपि साक्ष्यादि वृत्तिभिश्चानुभू-
यते ॥ तथाहं सुखमस्वाप्सं नैव किञ्चिदवेदिप-
म् ॥ ५६ ॥ इत्येवं प्रत्यभिज्ञापि पश्चात्तस्योपप-
द्यते ॥ जाग्रत्स्वप्नसुषुप्त्याख्यमेवेहामुत्र लोकयोः
॥५७॥ पश्चात्कर्मवशादेव विस्फुलिङ्गा यथानलात्॥
जायन्ते कारणादेव मनोबुद्ध्यादिकानि तु ॥ ५८ ॥
पयःपूर्णो घटो यद्वन्निमग्नः सलिलाशये ॥ तैरेवो-
द्धृत आयाति विज्ञानात्मा तथैत्यजात् ॥ ५९ ॥ वि-
ज्ञानकारणात्मानस्तथा तिष्ठंस्तथापि सः॥ दृश्यते

सत्सु तेष्वेव नष्टेष्वायात्यदृश्यताम् ॥६०॥ एकाकाशोऽर्यमा तृत्तत्कार्येष्विव परः पुमान् ॥ कूटस्थो दृश्यते तद्वद्गच्छत्यागच्छतीव सः ॥६१॥ मोहमात्रान्तरायत्वात्सर्वं तस्योपपद्यते ॥ देहाद्यतीत आत्मापि स्वयंज्योतिः स्वभावतः ॥६२॥ एवं जीवस्वरूपं ते प्रोक्तं दशरथात्मज ॥६३॥

॥ इति श्रीपद्मपुराणे उपरिभागे शिवगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे शिवरा० जीवस्वरूपकथनं नाम दशमोऽध्यायः ॥१०॥

॥ श्रीभगवानुवाच ॥ ॥ देहान्तरगतिं स्वस्य परलोकगतिं तथा ॥ वक्ष्यामि नृपशार्दूल मत्तः शृणु समाहितः ॥ १ ॥ भुक्तं पीतं यदस्त्यत्र तद्रसादामबन्धनम् ॥ स्थूलदेहस्य लिङ्गस्य तेन जीवनधारणम् ॥ २ ॥ व्याधिना जरया वापि पीड्यते जाठरोऽनलः ॥ श्लेष्मणा तेन भुक्तान्नं पीतं वा न पचत्यलम् ॥ ३ ॥ भुक्तपीतरसाभावादाशु शुष्यन्ति धातवः ॥ भुक्तपीतरसेनैव देहं लिम्पन्ति नित्यशः ॥ ४ ॥ समीकरोति यस्मात्तत्समानो वायुरुच्यते ॥ इदानीं तद्रसाभावादामबन्धनहानितः ॥ ५ ॥ परिपक्वरसले-

न यथाम्रं वृन्ततः फलम् ॥ स्वयमेव पतत्याशु तथा-
लिङ्गंतनोर्व्रजेत् ॥ ६ ॥ ततः स्थानादपाकृष्य हृषी-
काणां च वासनाः ॥ आध्यात्मिकाधिभूतानि हृ-
त्पद्मे चैकतां गतः ॥ ७ ॥ तदोर्ध्वगः प्राणवायुः सं-
युक्तो नववायुभिः ॥ ऊर्ध्वोच्छ्वासी भवत्येष तथातेनै-
कतां गतः ॥ ८ ॥ चक्षुषो वाथ मूर्ध्नो वा नाडीमार्गं
समाश्रितः ॥ विद्याकर्मसमायुक्तो वासनाभिश्च सं-
युतः ॥ ९ ॥ प्रज्ञात्मानं समाश्रित्य विज्ञानात्मोप-
सर्पति ॥ यथा कुम्भो नीयमानो देशाद्देशान्तरं प्र-
ति ॥ १० ॥ स्वपूर्ण एव सर्वत्र स आकाशोऽपि त-

त्र तु ॥ घटाकाशाख्यतां याति तद्वल्लिङ्गं परात्मनः
॥ ११ ॥ पुनर्देहान्तरं याति यथा कर्मानुसारतः ॥
आमोक्षात्संचरत्येवं मत्स्यः कूलद्वयं यथा ॥ १२ ॥
पापभोगाय चेद्गच्छेद्यमदूतैरधिष्ठितः ॥ यातनादेह-
माश्रित्य नरकानेव केवलम् ॥ १३ ॥ इष्टापूर्तादिक-
र्माणि योऽनुतिष्ठति सर्वदा ॥ पितृलोकं व्रजत्येष
धूममाश्रित्य बर्हिषः ॥ १४ ॥ धूमाद्रात्रिं ततः कृष्ण-
पक्षस्तस्माच्च दक्षिणम् ॥ अयनं च ततो लोकं पितॄ-
णां च ततः परम् ॥ १५ ॥ चन्द्रलोके दिव्यदेहं प्रा-
प्य भुङ्क्ते परां श्रियम् ॥ तत्र चन्द्रमसा सोऽसौ याव-

त्कर्मफलं वसेत् ॥ १६ ॥ तथैव कर्मशेषेण यथैतं पु-
नराव्रजेत् ॥ वपुर्विहाय जीवत्वमासाद्याकाशमेति
सः ॥ १७ ॥ आकाशाद्वायुमागत्य वायोरम्भो व्रज-
त्यथ ॥ अद्भ्यो मेघं समासाद्य ततो वृष्टिर्भवेदसौ
॥ १८ ॥ ततो धान्यानि भक्ष्याणि जायते कर्मचोदि-
तः ॥ योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ॥ १९ ॥
स्थाणुमन्येऽनुसंयान्ति यथाकर्म यथाश्रुतम् ॥ ततो-
ऽन्नत्वं समासाद्य पितृभ्यां भुज्यते परम् ॥२० ॥ त-
तः शुक्रं रजश्चैव भूत्वा गर्भोऽभिजायते ॥ ततः क-
र्मानुसारेण भवेत्स्त्रीपुन्नपुंसकम् ॥ २१ ॥ एवं जीव-

गतिः प्रोक्ता मुक्तिं तस्य वदामि ते ॥ यस्तु शान्त्या-
दियुक्तः सन्सदा विचारतो भवेत् ॥ २२ ॥ स याति
देवयानेन ब्रह्मलोकावधिं नरः ॥ अर्चिर्भूत्वा दिनं प्रा-
प्य शुक्लपक्षमथो व्रजेत् ॥ २३ ॥ उत्तरायणमासाद्य
संवत्सरमथो व्रजेत् ॥ आदित्यचन्द्रलोकौ तु विद्यु-
ल्लोकमतः परम् ॥ २४ ॥ अथ दिव्यः पुमान्कश्चिद्ब्र-
ह्मलोकादिहैति सः ॥ दिव्ये वपुषि संधाय जीव-
मेवं नयत्यसौ ॥ २५ ॥ ब्रह्मलोके दिव्यदेहे भुक्त्वा
भोगान्यथेप्सितान् ॥ तत्रोषित्वा चिरं कालं ब्रह्मणा
सह मुच्यते ॥ २६ ॥ शुद्धब्रह्मरतो यस्तु न स या-

त्येव कुत्रचित् ॥ तस्य प्राणा विलीयन्ते जले सैन्धवखिल्यवत् ॥ २७ ॥ स्वप्नदृष्टा यथा सृष्टिः प्रबुद्धस्य विलीयते ॥ ब्रह्मज्ञानवतस्तद्वद्विलीयन्ते तदैव ते ॥२८॥ विद्याकर्मविहीनो यस्तृतीयं स्थानमेति सः ॥ भुक्त्वाऽत्र नरकान्घोरान्महारौरवरौरवान् ॥ २९ ॥ पश्चात्प्राक्तनशेषेण क्षुद्रजन्तुर्भवेदसौ ॥ यूकामशकदंशादि जन्मासौ लभते भुवि ॥३०॥ एवं जीवगतिः प्रोक्ता किमन्यच्छ्रोतुमिच्छसि ॥३१॥ ॥ श्रीराम उवाच ॥ ॥ भगवन्यत्त्वया प्रोक्तं फलं तज्ज्ञानकर्मणोः ॥ ब्रह्मलोके चन्द्रलोके भुङ्क्ते भोगानि-

ति प्रभो ॥ ३२ ॥ गन्धर्वादिषु लोकेषु कथं भोगः समीरितः ॥ देवत्वं प्राप्नुयात्कश्चित्कश्चिदिन्द्रत्वमेति च ॥ ३३ ॥ एतत्कर्मफलं वास्तु विद्याफलमथापि वा ॥ तद्ब्रूहि गिरिजाकान्त तत्र मे संशयो महान् ॥ ३४ ॥ ॥ श्रीभगवानुवाच ॥ ॥ तद्विद्याकर्मणोरेवानुसारेण फलं भवेत् ॥ युवा च सुन्दरः शूरो नीरोगो बलवान् भवेत् ॥ ३५ ॥ सप्तद्वीपां वसुमतीं भुङ्क्ते निष्कण्टकं यदि ॥ स प्रोक्तो मानुषानन्दस्तस्माच्छतगुणो मतः ॥ ३६ ॥ मनुष्यस्तपसा युक्तो गन्धर्वो जायतेऽस्य तु ॥ तस्माच्छतगुणो देवगन्धर्वस्य न

संशयः ॥ ३७ ॥ एवं शतगुणानन्द उत्तरोत्तरतो भवेत् ॥ पितॄणां चिरलोकानामज्ञातसुरसंपदाम् ॥ ३८ ॥ देवतानामथेन्द्रस्य गुरोस्तद्वत्प्रजापतेः ॥ ब्रह्मणश्चैवमानन्दः पुरस्तादुत्तरोत्तरः ॥ ३९ ॥ ज्ञानाधिक्यात्सुखाधिक्यं नान्यदस्ति सुरालये ॥ श्रोत्रियोऽवृजिनोऽकामहतो यश्च द्विजो भवेत् ॥ ४० ॥ तस्याप्येवं समाख्याता आनन्दाश्चोत्तरोत्तरम् ॥ आत्मज्ञानात्परं नास्ति तस्माद्दशरथात्मज ॥ ४१ ॥ ब्राह्मणः कर्मभिर्नैव वर्धते नैव हीयते ॥ न लिप्यते पापकेन कर्मणा ज्ञानवान्यदि ॥ ४२ ॥ तस्मात्स-

र्वाधिको विप्रो ज्ञानवानेव जायते ॥ ज्ञात्वा यः कुरुते कर्म तस्याक्षय्यफलं लभेत् ॥ ४३ ॥ यत्फलं लभते मर्त्यैः कोटिब्राह्मणभोजनैः ॥ तत्फलं समवाप्नोति ज्ञानिनं यस्तु भोजयेत् ॥ ४४ ॥ ज्ञानिभ्यो दीयते यत्र तत्कोटिगुणितं भवेत् ॥ ज्ञानवन्तं द्विजं यस्तु द्विपते च नराधमः ॥ ४५ ॥ स शुष्यमाणो म्रियते यस्मादीश्वर एव सः ॥ उपासको न यात्येव यस्मात्पुनरधोगतिम् ॥ ४६ ॥ उपासनरतो भूत्वा तस्माद्भास्व सुखी नृप ॥ ४७ ॥

॥ इति श्रीपद्मपुराणे उपरिभागे शिवगी-

तासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे शिवराघवसंवादे जीवगत्यादिनिरूपणं नामैकादशोऽध्यायः ॥ ११ ॥

॥ श्रीराम उवाच ॥ ॥ भगवन्देवदेवेश नमस्तेऽस्तु महेश्वर ॥ उपासनविधिं ब्रूहि देशं कालं च तस्य तु ॥१ ॥ अङ्गानि नियमांश्चैव मयि तेऽनुग्रहो यदि ॥ ॥ ईश्वर उवाच ॥ ॥ शृणु राम प्रवक्ष्यामि देशं कालमुपासने ॥ २ ॥ सर्वाकारोऽहमेवैकः सच्चिदानन्दविग्रहः ॥ मदंशेन परिच्छिन्ना देहाः सर्वदिवौकसाम् ॥ ३ ॥ ये त्वन्यदेवताभक्ता य-

जन्ते श्रद्धयान्विताः ॥ तेऽपि मामेव राजेन्द्र यजन्त्यविधिपूर्वकम् ॥ ४ ॥ यस्मात्सर्वमिदं विश्वं मत्तो न व्यतिरिच्यते ॥ सर्वक्रियाणां भोक्ताहं सर्वस्याहं फलप्रदः ॥ ५ ॥ येनाकारेण ये मर्त्या मामेवैकमुपासते ॥ तेनाकारेण तेभ्योऽहं प्रसन्नो वाञ्छितं ददे ॥ ६ ॥ विधिनाऽविधिना वापि भक्त्या ये मामुपासते ॥ तेभ्यः फलं प्रयच्छामि प्रसन्नोऽहं न संशयः ॥ ७॥ अपि चेत्सुदुराचारो भजते मामनन्यभाक् ॥ साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ८ ॥ स्वजीवत्वेन यो वेत्ति मामेवैकमनन्य-

धीः ॥ तं न स्पृशन्ति पापानि ब्रह्महत्यादिकान्य-
पि ॥ ९ ॥ उपासाविधयस्तत्र चत्वारः परिकीर्तिं-
ताः ॥ संपदारोपसंवर्गाध्यासा इति मनीषिभिः
॥ १० ॥ अल्पस्य चाधिकत्वेन गुणयोगाद्विचिन्तन-
म् ॥ अनन्तं वै मन इति संपद्विधिरुदीरितः ॥ ११ ॥
विधावारोप्य योपासा सारोपः परिकीर्तितः ॥ यद्व-
दोङ्कारमुद्गीथमुपासीतेत्युदाहृतः ॥ १२ ॥ आरोपो
बुद्धिपूर्वेण य उपासाविधिश्च सः ॥ योषित्यग्निमति-
र्यत्तदध्यासः स उदाहृतः ॥ १३ ॥ क्रियायोगेन चो-
पासाविधिः संवर्ग उच्यते ॥ संहृत्य वायुः प्रलये भू-

तान्येकोऽवसीदति ॥ १४ ॥ उपसंगम्य बुद्ध्या यदासनं देवतात्मना ॥ तदुपासनमन्तः स्यात्तद्बहिः संपदादयः ॥१५॥ ज्ञानान्तरानन्तरितसजातिज्ञानसंहतेः ॥ संपन्नदेवतात्मत्वमुपासनमुदीरितम् ॥ १६ ॥ संपदादिषु बाह्येषु दृढबुद्धिरुपासनम् ॥ कर्मकाले तदङ्गेषु दृष्टिमात्रमुपासनम् ॥ १७ ॥ उपासनमिति प्रोक्तं तदङ्गानि ब्रुवे शृणु ॥ तीर्थक्षेत्रादिगमनं श्राद्धं तत्र परित्यजेत् ॥ १८ ॥ सचित्तैकाग्रता यत्र तत्रासीत सुखं द्विजः ॥ कम्बले मृदुतल्पे वा व्याघ्रचर्मणि वास्थितः ॥ १९ ॥ विविक्तदेशे नियतः समग्री-

र्शिरस्तनुः ॥ अत्याश्रमस्थः सकलानीन्द्रियाणि निरुध्य च ॥ २० ॥ भक्त्याथ स्वगुरुं नत्वा योगं विद्वान्प्रयोजयेत् ॥ यस्त्वविज्ञानवान्भवत्ययुक्तमनसा सदा ॥ २१ ॥ तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ विज्ञानी यस्तु भवति युक्तेन मनसा सदा ॥ २२ ॥ तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः ॥ २३ ॥ न स तत्पदमाप्नोति संसारमधिगच्छति ॥ विज्ञानी यस्तु भवति समनस्कः सदा शुचिः ॥ २४॥ स तत्पदमवाप्नोति यस्माद्भूयो न जायते॥ विज्ञानसा-

रथिर्यस्तु मनःप्रग्रह एव च ॥ २५ ॥ सोऽध्वनः
पारमाप्नोति ममैव परमं पदम् ॥ हृत्पुण्डरीकं विरजं
विशुद्धं विशदं तथा ॥ २६ ॥ विशोकं च विचिन्त्यात्र
ध्यायेन्मां परमेश्वरम् ॥ अचिन्त्यरूपमव्यक्तमनन्त-
ममृतं शिवम् ॥२७ ॥ आदिमध्यान्तरहितं प्रशान्तं
ब्रह्म कारणम् ॥ एकं विभुं चिदानन्दमरूपमजमद्भु-
तम्॥२८॥शुद्धस्फटिकसंकाशमुमादेहार्धधारिणम् ॥
व्याघ्रचर्माम्बरधरं नीलकण्ठं त्रिलोचनम् ॥ २९ ॥
जटाधरं चन्द्रमौलिं नागयज्ञोपवीतिनम् ॥ व्याघ्रच-
र्मोत्तरीयं च वरेण्यमभयप्रदम् ॥ ३० ॥ पराभ्याम्-

र्ध्वहस्ताभ्यां बिभ्राणं परशुं मृगम् ॥ कोटिमध्याह्न-
सूर्याभं चन्द्रकोटिसुशीतलम् ॥ ३१॥ चन्द्रसूर्याग्नि-
नयनं स्मेरवक्त्रसरोरुहम्॥ भूतिभूषितसर्वाङ्गं सर्वा-
भरणभूषितम् ॥ ३२ ॥ एवमात्मारणिं कृत्वा प्रण-
वं चोत्तरारणिम् ॥ ज्ञाननिर्मथनाभ्यासात्साक्षात्प-
श्यति मां जनः ॥३३॥ वेदवाक्यैरलभ्योऽहं न शास्त्रै-
र्नापि चेतसा॥ ध्यानेन वृणुते यो मां सर्वदाहं वृणो-
मि तम्॥ ३४ ॥ नाविरतो दुश्चरितान्नाशान्तो नास-
माहितः॥ नाशान्तमानसो वापि प्रज्ञानेन लभेत मा-
म् ॥३५॥ जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चो यः प्रकाशते

॥ तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ ३६ ॥
त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ॥ तेभ्यो
विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥ ३७ ॥ ए-
को देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरा-
त्मा ॥ सर्वाध्यक्षः सर्वभूताधिवासः साक्षी चेता केव-
लो निर्गुणश्च ॥ ३८ ॥ एको वशी सर्वभूतान्तरात्मा-
प्येकं बीजं नित्यदा यः करोति ॥ तं मां नित्यं येऽनु-
पश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्
॥ ३९ ॥ अग्निर्यथैको भुवनं प्रविष्टो रूपंरूपं प्रति-
रूपो बभूव ॥ एकस्तथा सर्वभूतान्तरात्मा न लिप्य-

ते लोकदुःखेन बाह्यः ॥ ४० ॥ वेदेह यो मां पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ॥ स एव विद्वानमृतोऽत्र भूयो नान्यस्तु पन्था अयनाय विद्यते ॥ ४१ ॥ हिरण्यगर्भं विदधामि पूर्वं वेदांश्च तस्मै प्रहिणोमि योऽहम् ॥ तं देवमीड्यं पुरुषं पुराणं निश्चित्य मां मृत्युमुखात्प्रमुच्यते ॥ ४२ ॥ एवं शान्त्यादियुक्तः सन्वेत्ति मां तत्त्वतस्तु यः ॥ निर्मुक्तदुःखसंतानः सोऽन्ते मय्येव लीयते ॥ ४३ ॥ ७ ॥

॥ इति श्रीपद्मपुराणे शिवगीतासूपनिषत्सु ब्रह्मविद्यायां योग० शिवराघवसंवादे उपास-

नाज्ञानफलं नाम द्वादशोऽध्यायः ॥ १२ ॥
॥ सूत उवाच ॥ ॥ एवं श्रुत्वा कौसलेयस्तुष्टो मतिमतां वरः ॥ पप्रच्छ गिरिजाकान्तं सुभगं मुक्तिलक्षणम् ॥ १ ॥ ॥ श्रीराम उवाच ॥ ॥ भगवन्करुणाविष्टहृदय त्वं प्रसीद मे ॥ स्वरूपं लक्षणं मुक्तेः प्रब्रूहि परमेश्वर ॥ २ ॥ ॥ श्रीभगवानुवाच ॥ सालोक्यमपि सारूप्यं सार्ष्ट्यं सायुज्यमेव च ॥ कैवल्यं चेति तां विद्धि मुक्तिं राघव पञ्चधा ॥३॥ मां पूजयति निष्कामः सर्वदाऽज्ञानवर्जितः ॥ स मे लोकं समासाद्य भुङ्क्ते भोगान्यथेप्सितान् ॥४॥ ज्ञात्वा

मां पूजयेद्यस्तु सर्वकामविवर्जितः ॥ मया समान-
रूपः सन्मम लोके महीयते ॥ ५ ॥ इष्टापूर्तादिकर्मा-
णि मत्प्रीत्यै कुरुते तु यः ॥ सोऽपि तत्फलमाप्नोति
नात्र कार्या विचारणा ॥६॥ यत्करोति यदश्नाति य-
ज्जुहोति ददाति यत् ॥ यत्तपस्यति तत्सर्वं यः करोति
मदर्पणम् ॥७॥ मल्लोके स श्रियं भुङ्क्ते मत्तुल्यं प्राभवं
भजेत् ॥ यस्तु शान्त्यादियुक्तः सन्मामात्मत्वेन प-
श्यति ॥ ८ ॥ स जायते परं ज्योतिरद्वैतं ब्रह्म केव-
लम् ॥ आत्मस्वरूपावस्थानं मुक्तिरित्यभिधीयते ॥
॥ ९ ॥ सत्यं ज्ञानमनन्तं सदानन्दं ब्रह्म केवलम् ॥

सर्वधर्मविहीनं च मनोवाचामगोचरम् ॥ १० ॥ स-
जातीयविजातीयपदार्थानामसंभवात् ॥ अतस्तद्व्य-
तिरिक्तानामद्वैतमिति संज्ञितम् ॥ ११ ॥ मत्तो रूप-
मिदं राम शुद्धं यदभिधीयते ॥ मय्येव दृश्यते सर्वं
जगत्स्थावरजङ्गमम् ॥१२॥ व्योम्नि गन्धर्वनगरं य-
था दृष्टं न दृश्यते ॥ अनाद्यविद्यया विश्वं सर्वं मय्ये-
व कल्प्यते ॥ १३ ॥ मम स्वरूपज्ञानेन यदाऽविद्या
प्रणश्यति ॥ तदैक एव वर्त्तेऽहं मनोवाचामगोचरः ॥
॥१४॥ सदैव परमानन्दः स्वप्रकाशश्चिदात्मकः ॥ न
कालः पञ्च भूतानि न दिशो विदिशश्च न ॥ मदन्य-

न्नास्ति यत्किञ्चित्तदा वर्त्तेऽहमेकलः ॥१५॥ न संदृशे तिष्ठति मे स्वरूपं न चक्षुषा पश्यति मां तु कश्चित् ॥ हृदा मनीषा मनसाभिक्लृप्तं ये मां विदुस्ते ह्यमृता भवन्ति ॥ १६ ॥ श्रीराम उवाच ॥ कथं भगवतो ज्ञानं शुद्धं मर्त्यस्य जायते ॥ तत्रोपायं हर ब्रूहि मयि तेऽनुग्रहो यदि ॥१७॥ ॥ श्री भगवानुवाच ॥ विरज्य सर्वभूतेभ्य आविरिञ्चिपदादपि ॥ घृणां वितत्य सर्वत्र पुत्रमित्रादिकेष्वपि॥१८॥श्रद्धालुर्मुक्तिमार्गेषु वेदान्तज्ञानलिप्सया ॥ उपायनकरो भूत्वा गुरुं ब्रह्मविदं व्रजेत् ॥१९॥ तमर्थं पुरतः कृत्वा दण्डवत्प्र-

णमेद्गुरुम् ॥ उत्थाय चाञ्जलिं कृत्वा वाञ्छितार्थान्निवेदयेत् ॥ २० ॥ सेवाभिः परितोष्यैनं चिरकालं समाहितः ॥ सर्ववेदान्तवाक्यार्थं शृणुयात्सुसमाहितः ॥ ॥ २१ ॥सर्ववेदान्तवाक्यानां मयि तात्पर्यनिश्चयम्॥ श्रवणं नाम तत्प्राहुः सर्वे ते ब्रह्मवादिनः ॥२२ ॥लोहमण्यादिदृष्टान्तयुक्तिभिर्यद्विचिन्तनम् ॥ तदेव मननं प्राहुर्वाक्यार्थस्योपबृंहणम् ॥ २३ ॥ निर्मोहो निरहंकारः समः संगविवर्जितः ॥ सदा शान्त्यादियुक्तः सन्नात्मन्यात्मानमीक्षते ॥ २४ ॥ यत्सदा ध्यानयोगेन तन्निदिध्यासनं स्मृतम् ॥ सर्वकर्मक्षयवशा-

त्साक्षात्कारोऽपि चात्मनः ॥ २५ ॥ कस्यचिज्जायते
शीघ्रं चिरकालेन कस्यचित् ॥ कूटस्थानीह कर्मा-
णि चिरकालार्जितान्यपि ॥ २६ ॥ ज्ञानेनैव विन
श्यन्ति न तु कर्मायुतैरपि ॥ ज्ञानादूर्ध्वं तु यत्कि-
ञ्चित्पुण्यं वा पापमेव वा ॥ २७ ॥ क्रियते बहुवाल्पं-
वा न तेनायं विलिप्यते ॥ शरीरारम्भकं यत्तु प्रा-
रब्धं कर्म तन्मतम् ॥ २८ ॥ तद्भोगेनैव नष्टं स्यान्न
तु ज्ञानेन नश्यति ॥ निर्मोहो निरहंकारो निर्लेपः
संगवर्जितः ॥ २९ ॥ सर्वभूतेषु चात्मानं सर्वभूता-
नि चात्मनि ॥ यः पश्यन्संचरत्येष जीवन्मुक्तोऽभि-

धीयते ॥ ३० ॥ अहिनिर्ल्वयिनी यद्वद्द्रष्टुः पूर्वं भयप्रदा ॥ ततोऽस्य न भयं किंचित्तद्वद्द्रष्टुरयं जनः ॥ ३१ ॥ यदा सर्वे प्रमुच्यन्ते कामा येऽस्य वशं गताः ॥ अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ ३२ ॥ मोक्षस्य नहि वासोऽस्ति न ग्रामान्तरमेव वा ॥ अज्ञानहृदयग्रन्थिनाशो मोक्ष इति स्मृतः ॥३३॥ वृक्षाग्रच्युतपादो यः स तदैव पतत्यधः ॥ तद्वज्ज्ञानवतो मुक्तिर्जायते निश्चितापि तु ॥३४॥ तीर्थे चण्डालगेहे वा यदि वा नष्टचेतनः ॥ परित्यजन्देहमिमं ज्ञानादेव विमुच्यते ॥ ३५ ॥ संवीतो येन केना-

श्नन्भक्ष्यं वाभक्ष्यमेव वा ॥ शयानो यत्र कुत्रापि सर्वात्मा मुच्यतेऽत्र सः ॥ ३६ ॥ क्षीराद्दुद्धृतमाज्यं यत्क्षिप्तं पयसि तत्पुनः ॥ न तेनैवैकतां याति संसारे ज्ञानवांस्तथा ॥ ३७ ॥ नित्यं पठति योऽध्यायमिमं राम शृणोति वा ॥ स मुच्यते देहबन्धादनायासेन राघव ॥ ३८ ॥ अतः संयतचित्तस्त्वं नित्यं पठ महीपते ॥ अनायासेन तेनैव सर्वथा मोक्षमाप्स्यसि ॥ ३९ ॥

॥ इति श्रीपद्मपुराणे शिवगीतासू॰ शिवराघवसंवादे त्रयोदशोऽध्यायः ॥ १३ ॥ छ ॥

॥ श्रीराम उवाच ॥ ॥ भगवन्यदि ते रूपं सच्चिदानन्दविग्रहम् ॥ निश्चलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ॥ १ ॥ सर्वधर्मविहीनं च मनोवाचामगोचरम् ॥ सर्वव्यापिनमात्मानमीक्षते सर्वतः स्थितम् ॥ २॥ आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत्परम् ॥ अमूर्तं सर्वभूतात्माकारं कारणकारणम् ॥ ३ ॥ यत्तदृश्यमग्राह्यं तद्ग्राह्यं वा कथं भवेत् ॥ अत्रोपायमजानानस्तेन खिन्नोऽस्मि शंकर ॥४॥ ॥ श्रीभगवानुवाच ॥ ॥ शृणु राजन्प्रवक्ष्यामि तत्रोपायं महाभुज ॥ सगुणोपासनाभिस्तु चित्तैकाग्र्यं वि-

धाय च ॥ ५ ॥ स्थूलारुन्धतिकान्यायात्तत्र चित्तं प्र-
वर्तयेत् ॥ तस्मिन्नन्नमये पिण्डे स्थूलदेहे तनूभृता-
म् ॥ ६ ॥ जन्मव्याधिजरामृत्युनिलये वर्तते दृढा
॥ ७ ॥ आत्मबुद्धिरहंमानात्कदाचिन्नैव हीयते ॥ आ-
त्मा न जायते नित्यो म्रियते वा कथंचन ॥ ८ ॥ संजा-
यतेऽस्ति विपरिणमते वर्धते तथा ॥ क्षीयते नश्यती-
त्येते षड्भावा वपुषः स्मृताः ॥ ९ ॥ आत्मनो न वि-
कारित्वं घटस्थनभसो यथा ॥ एवमात्मावपुस्तस्मा-
दिति संचिन्तयेद्बुधः ॥ १० ॥ मूषानिक्षिप्तहेमाभः
कोशः प्राणमयोऽत्र तु ॥ वर्ततेऽन्तरतो देहे बद्धः प्रा-

णादिवायुभिः ॥ ११ ॥ कर्मेन्द्रियैः समायुक्तश्चल-
नादिक्रियात्मकः ॥ क्षुत्पिपासापराभूतो नायमात्मा-
जडो यतः ॥ १२ ॥ चिद्रूप आत्मा येनैव स्वदेहम-
नुपश्यति ॥ आत्मैवाहं परं ब्रह्म निर्लेपः सुखनीर-
धिः ॥ १३ ॥ न तदश्नाति कंचैनं न तदश्नाति कश्च-
न ॥ ततः प्राणमये कोशे कोशोऽस्त्येव मनोमयः ॥
॥ १४ ॥ स संकल्पविकल्पात्मा बुद्धीन्द्रियसमाहि-
तः ॥ कामक्रोधस्तथा लोभो मोहो मात्सर्यमेव च
॥ १५ ॥ मदश्चेत्यरिषड्वर्गो ममतेच्छादयोऽपि च ॥
मनोमयस्य कोशस्य धर्मा एतस्य तत्र तु ॥ १६ ॥

या कर्मविषया बुद्धिर्वेदशास्त्रार्थनिश्चिता ॥ सा तु
ज्ञानेन्द्रियैः सार्धं विज्ञानमयकोशतः ॥ १७॥ इह
कर्तृत्वाभिमानी स एव तु न संशयः ॥ इहामुत्र गति-
स्तस्य स जीवो व्यावहारिकः ॥१८॥ व्योमादिसात्त्वि-
कांशेभ्यो जायन्ते धीन्द्रियाणि तु ॥ व्योम्नः श्रोत्रं
भुवो घ्राणं जलाज्जिह्वाथ तेजसः ॥ १९ ॥ चक्षुर्वा-
योस्त्वगुत्पन्ना तेषां भौतिकता ततः॥ व्योमादीनां स-
मस्तानां सात्त्विकांशेभ्य एव तु॥ २०॥ जायेते बुद्धि-
मनसी बुद्धिः स्यान्निश्चयात्मिका॥ वाक्पाणिपादपा-
यूपस्थानि कर्मेन्द्रियाणि तु॥ २१॥ व्योमादीनां र-

जोंऽशेभ्यो व्यस्तेभ्यस्तान्यनुक्रमात् ॥ समस्तेभ्यो
रजोंऽशेभ्यः पञ्च प्राणादिवायवः ॥२२॥ जायन्ते स-
प्तदशकमेवं लिङ्गशरीरकम् ॥ एवं लिङ्गशरीरं तु त-
प्तायःपिण्डवद्यतः ॥ २३ ॥ परस्पराध्यासयोगात्सा-
क्षी चैतन्यसंयुतः ॥ तदानन्दमयः कोशो भोक्तृत्वं प्र-
तिपद्यते ॥ २४ ॥ विपाककर्मफलादीनां भोक्तात्र
स स्मृतः ॥ यदाध्यासं विहायैव स्वस्वरूपेण तिष्ठति
॥ २५ ॥ अविद्यामात्रसंयुक्तः साक्ष्यात्मा जायते
तदा ॥ * द्रष्टान्तःकरणादीनामनुभूतस्मृतेरपि ॥
॥ २६ ॥ अतोऽन्तः करणाध्यासादध्यस्तत्वेन चात्म-

न्नि ॥ भोक्तृत्वं साक्षिता चेति द्वैधं तस्योपपद्यते ॥
॥ २७ ॥ आतपश्चापि तच्छाया तत्प्रकाशे विराज-
ते ॥ एवं भोजयिता तत्र भुङ्क्तेऽन्यः कर्मणः फलम् ॥
॥ २८ ॥ क्षेत्रज्ञं रथिनं विद्धि शरीरं रथमेव तु ॥ बु-
द्धिं तु सारथिं विद्धि प्रग्रहं तु मनस्तथा ॥ २९ ॥ इ-
न्द्रियाणि हयान्विद्धि विषयांस्तेषु गोचरान् ॥ इन्द्रि-
यैर्मनसा युक्तं भोक्तारं विद्धि पूरुषम् ॥ ३० ॥ एवं
शान्त्यादियुक्तः सन्नुपास्ते यः सदा द्विजः ॥ उद्घा-
ट्योद्घाट्यैकमेकं यथैव कदलीतरोः ॥ ३१ ॥ वल्क-
लानि ततः पश्चाल्लभते सारमुत्तमम् ॥ तथैव पञ्चभू-

तेषु मनः संक्रमते क्रमात् ॥ ३२ ॥ तेषां मध्ये ततः सारमात्मानमपि विन्दति॥ एवं मनः समाधाय संयतो मनसि द्विजः॥ ३३॥ अथ प्रवर्तयेच्चित्तं निराकारे परात्मनि ॥ ततो मनः प्रगृह्णाति परमात्मानमव्ययम् ॥ यत्तददृश्यमग्राह्यमस्थूलाद्युक्तिगोचरम् ॥३४॥

॥ ॥ श्रीराम उवाच ॥ ॥ भगवञ्छ्रवणे नैव प्रवर्तन्ते जनाः कथम् ॥ वेदशास्त्रार्थसंपन्ना यज्वानः सत्यवादिनः ॥ ३५ ॥ शृण्वन्तोऽपि तथात्मानं जानते नैव केचन ॥ ज्ञात्वापि मन्वते मिथ्या किमेतत्तव मायया ॥ ३६ ॥

॥ श्रीभगवानुवाच ॥ ॥ एवमे-

व महाबाहो नात्र कार्या विचारणा ॥ दैवी ह्येषा गु-
णमयी मम माया दुरत्यया ॥ ३७ ॥ मामेव ये प्र-
पद्यन्ते मायामेतां तरन्ति ते ॥ अभक्ता ये महाबाहो
मम श्रद्धाविवर्जिताः ॥ ३८ ॥ फलं कामयमानास्ते
चैहिकामुष्मिकादिकम् ॥ क्षयिष्ण्वल्पं सातिशयं य-
तः कर्मफलं मतम् ॥ ३९ ॥ तदविज्ञाय कर्माणि ये
कुर्वन्ति नराधमाः ॥ मातुः पतन्ति ते गर्भे मृत्योर्वक्त्रे
पुनः पुनः ॥ ४० ॥ नानायोनिषु जातस्य देहिनो य-
स्यकस्यचित् ॥ कोटिजन्मार्जितैः पुण्यैर्मयि भक्तिः
प्रजायते ॥ ४१ ॥ स एव लभते ज्ञानं मद्भक्तः श्रद्ध-

यान्वितः ॥ नान्यकर्माणि कुर्वाणो जन्मकोटिशतैर-
पि ॥ ४२ ॥ ततः सर्वं परित्यज्य मद्भक्तिं समुदाहर ॥
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ॥ ४३ ॥ अ-
हं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ यत्करो-
षि यदश्नासि यज्जुहोषि ददासि यत् ॥ ४४ ॥ य-
त्तपस्यसि राम त्वं तत्कुरुष्व मदर्पणम् ॥ ततः पर-
तरा नास्ति भक्तिर्मयि रघूत्तम ॥ ४५ ॥

॥ इति श्रीपद्मपुराणे उपरिभागे शिवगीता-
सूप० [illegible] राघवसंवादे पञ्चकोशोपपादनं नाम
चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥

॥ श्रीराम उवाच ॥ ॥ भक्तिस्ते कीदृशी देव जायते वा कथंचन ॥ यया निर्वाणरूपत्वं लभते मोक्षमुत्तमम् ॥ तद्ब्रूहि गिरिजाकान्त मयि तेऽनुग्रहो यदि ॥ १ ॥ ॥ श्रीभगवानुवाच ॥ ॥ यो वेदाध्ययनं यज्ञं दानानि विविधानि च ॥ मदर्पणधिया कुर्यात्स मे भक्तः स मे प्रियः ॥ २ ॥ नर्यभस्म समादाय विशुद्धं श्रोत्रियालयात् ॥ अग्निरित्यादिभिर्मन्त्रैरभिमन्त्र्य यथाविधि ॥ ३॥ उद्धूलयति गात्राणि तेन चार्चति मामपि॥तस्मात्परतरा भक्तिर्मम राम न विद्यते ॥ ४ ॥ सर्वदा शिरसा कण्ठे रुद्राक्षान्धारये-

त्तु यः ॥ पञ्चाक्षरीजपरतः स मे भक्तः स मे प्रियः
॥ ५ ॥ भस्मच्छन्नो भस्मशायी सर्वदा विजितेन्द्रि-
यः ॥ यस्तु रुद्रं जपेन्नित्यं चिन्तयेन्मामनन्यधीः
॥ ६ ॥ स तेनैव च देहेन शिवः संजायते स्वयम् ॥
जपेद्यो रुद्रसूक्तानि तथाथर्वशिरः परम् ॥ ७ ॥ कै-
वल्योपनिषत्सूक्तं श्वेताश्वतरमेव च ॥ ततः परतरो
भक्तो मम लोके न विद्यते ॥ ८ ॥ अन्यत्र धर्माद-
न्यस्मा[illegible]त्रास्मात्कृताकृतात् ॥ अन्यत्र भूताद्भ-
व्याच्च यत्तत्प्रवक्ष्यामि तच्छृणु ॥ ९ ॥ वदन्ति यत्पदं वे-
दाः शास्त्राणि विविधानि च ॥ सर्वोपनिषदां सारं द-

ध्नो घृतमिवोद्धृतम् ॥ १० ॥ यदिच्छन्तो ब्रह्मचर्यं च-
रन्ति मु[illegible]यः सदा ॥ तत्ते पदं संग्रहेण ब्रवीम्योमिति
यत्पद[illegible] ॥ ११ ॥ एतदेवाक्षरं ब्रह्म चैतदेवाक्षरं पर-
म् ॥ एतदेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्
॥ १२ ॥ एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ॥ ए-
तदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ १३ ॥ छ-
न्दसां यस्तु धेनूनामृषभत्वेन चोदितः ॥ इदमेवाव-
धिः सेतुरमृतस्य च धारणात् ॥ १४ ॥ मेधसा पिहि-
तं कोशं ब्रह्मणो यत्परं मतम् ॥ चतस्रस्तस्य मात्रा-
स्युरकारोकारकौ तथा ॥ १५ ॥ मकारश्चावसानेऽर्ध-

मात्रेति परिकीर्तिता ॥ पूर्वत्र भूश्च ऋग्वेदो ब्रह्माष्ट-
वसवस्तथा ॥ गार्हपत्यश्च गायत्री गङ्गा प्रातःसव-
स्तथा ॥ १६ ॥ द्वितीया च भुवो विष्णू रुद्रोऽनुष्टुप्
यजुस्तथा ॥ यमुनादक्षिणाग्निश्च माध्यन्दिनसवस्त-
था ॥ १७ ॥ तृतीया च सुवः सामान्यादित्यश्च महे-
श्वरः ॥ अग्निराहवनीयश्च जगती च सरस्वती
॥ १८ ॥ तृतीयं सवनं प्रोक्तमथर्वत्वेन यन्मतम् ॥ च-
तुर्थी यदवसानेऽर्धमात्रा सा सोमलोकगा ॥ १९ ॥
अथर्वाङ्गिरसः संवर्तकोऽग्निर्मरुतस्तथा ॥ विराट् स-
भ्यावसथ्यौ च शुतुद्रिर्यज्ञपुच्छकः ॥ २० ॥ प्रथमा

रक्तवर्णा स्याद्द्वितीया भास्वरा मता ॥ तृतीया विद्यु-
दाभा स्याच्चतुर्थी शुक्लवर्णिनी ॥ २१ ॥ सर्वं जातं
जायमानं तदोङ्कारे प्रतिष्ठितम् ॥ विश्वं भूतं च भु-
वनं विचित्रं बहुधा तथा ॥ २२ ॥ जातं च जायमानं
च तत्सर्वं रुद्र उच्यते ॥ तस्मिन्नेव पुनः प्राणाः सर्व-
मोङ्कार उच्यते ॥ २३ ॥ प्रविलीनं तदोङ्कारे परं ब्र-
ह्म सनातनम् ॥ तस्मादोङ्कारजापी यः स मुक्तो नात्र
संशयः ॥ २४ ॥ त्रेताग्नेः स्मार्तवह्नेर्वा शैवाग्नेर्वा स-
माहृतम् ॥ भस्माभिमन्त्र्य यो मां तु प्रणवेन प्रपूज-
येत् ॥ २५ ॥ तस्मात्परतरो भक्तो मम लोके न

विद्यते ॥ शालाग्नेर्दाववह्नेर्वा भस्मादायाभिमन्त्रितम् ॥२६॥ यो विलिम्पति गात्राणि स शूद्रोऽपि विमुच्यते ॥ कुशपुष्पैर्बिल्वदलैः पुष्पैर्वा गिरिसंभवैः॥ ॥२७॥ यो मामर्चयते नित्यं प्रणवेन प्रियो हि सः॥ पुष्पं फलं समूलं वा पत्रं सलिलमेव वा ॥२८॥ यो दद्यात्प्रणवे मह्यं तत्कोटिगुणितं भवेत् ॥ अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ॥२९॥ यस्यास्त्यध्य[illegible]सं नित्यं स मे भक्तः स मे प्रियः॥ प्रदोषे यो मम स्थानं गत्वा पूजयते तु माम्॥ ३०॥ स परां श्रियमाप्नोति पश्चान्मयि विलीयते ॥ अष्टम्यां

च चतुर्दश्यां पर्वणोरुभयोरपि ॥३१॥ भूतिभूषित-
सर्वांगो यः पूजयति मां निशि ॥ कृष्णपक्षे विशेषेण
स मे [illegible] स मे प्रियः ॥३२॥ एकादश्यामुपोष्यै-
व यः पूजयति मां निशि ॥ सोमवारे विशेषेण स
मे भक्तो न नश्यति ॥ ३३ ॥ पञ्चामृतैः स्नापयेद्यः
पञ्चगव्येन वा पुनः ॥ पुष्पोदकैः कुशजलैस्तस्मा-
न्नान्यः प्रियो मम ॥ ३४ ॥ पयसा सर्पिषा वापि-
मधुनेक्षुरसेन वा ॥ पक्वाम्रफलजेनापि नारिकेरज-
लेन वा ॥ ३५ ॥ गन्धोदकेन वा मां यो रुद्रमन्त्रम-
नुस्मरन् ॥ अभिषिञ्चेत्ततो नान्यः कश्चित्प्रियतरो

मम ॥ ३६ ॥ आदित्याभिमुखो भूत्वा ऊर्ध्ववाहुर्ज-
ले स्थितः ॥ मां ध्यायन् रविबिम्बस्थमथर्वाङ्गिरसं
जपेत् ॥३७॥ प्रविशेन्मे शरीरेऽसौ गृहं गृहपतिर्य-
था ॥ बृहद्रथन्तरं वामदेव्यं देवव्रतानि च ॥ ३८ ॥
तद्योगानाज्यदोहांश्च यो गायति ममाग्रतः ॥ इह
श्रियं परां भुक्त्वा मम सायुज्यमाप्नुयात् ॥ ३९ ॥
ईशावास्यादि मन्त्रान् यो जपेन्नित्यं ममाग्रतः ॥ म-
त्सायुज्यमवाप्नोति मम लोके महीयते ॥ ४० ॥ भ-
क्तियोगो मया प्रोक्त एवं रघुकुलोद्भव ॥ सर्वकामप्र-
दो मत्तः किमन्यच्छ्रोतुमिच्छसि ॥ ४१ ॥

॥ इति श्रीपद्मपुराणे उपरिभागे शिवगीता-
सू०शि[illegible]घवसंवादे भक्तियोगो नाम पञ्चद-
शो[illegible]ध्यायः ॥ १५॥ ॥॥ छ ॥

॥ श्रीराम उवाच ॥ ॥ भगवन्मोक्षमार्गो य-
स्त्वया सम्यगुदाहृतः ॥ तत्राधिकारिणं ब्रूहि तत्र मे
संशयो महान् ॥ १ ॥ ॥ श्रीभगवानुवाच ॥
ब्रह्मक्षत्रविशः शूद्राः स्त्रियश्चात्राधिकारिणः ॥ ब्रह्म-
चारी गृहस्थो वाऽनुपनीतोऽथवा द्विजः ॥ २ ॥ व-
नस्थो वाऽवनस्थो वा यतिः पाशुपतव्रती ॥ बहुना-
त्र किमुक्तेन यस्य भक्तिः शिवार्चने ॥३॥ स एवात्रा-

धिकारी स्यान्नान्यचित्तः कथंचन ॥ जडोऽन्धो बधिरो मूको निःशौचः कर्मवर्जितः ॥ ४ ॥ अज्ञोपहासका भक्ता भूतिरुद्राक्षधारिणः ॥ लिङ्गिनो यश्च वा द्वेष्टि ते नैवात्राधिकारिणः ॥५॥ यो मां गुरुं पाशुपतं व्रतं द्वेष्टि धराधिप ॥ विष्णुं वा न स मुच्येत जन्मकोटिशतैरपि ॥६॥ अनेककर्मसक्तोऽपि शिवज्ञानविवर्जितः ॥ शिवभक्तिविहीनश्च संसारी नैव मुच्यते ॥ ७ ॥ आसक्ताः फलरागेण ये त्ववैदिककर्मणि ॥ दृष्टमात्रफलास्ते तु न भक्ता विधिकारिणः ॥ ८ ॥ अविमुक्ते द्वारकायां श्रीशैले पुण्डरीकके ॥ देहान्ते तारकं

ब्रह्म लभते मदनुग्रहात् ॥ ९ ॥ यस्य हस्तौ च पादौ
च मनश्चैव सुसंयतम् ॥ विद्या तपश्च कीर्तिश्च स ती-
र्थफलमश्नुते ॥ १० ॥ विप्रस्यानुपनीतस्य विधिरे-
वमुदाहृतः ॥ नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते
॥ ११ ॥ स शूद्रेण समस्तावद्यावद्वेदान्न जायते ॥
नामसंकीर्तने ध्याने सर्व एवाधिकारिणः ॥ १२ ॥ संसा-
रान्मुच्यते जन्तुः शिवतादात्म्यभावनात् ॥ तथा दानं
तपो वेदाध्ययनं चान्यकर्म वा ॥ १३ ॥ सहस्रांशं तु
नार्हन्ति सर्वदा ध्यानकर्मणः ॥ जातिमाश्रममङ्गानि
देशं कालमथापि वा ॥ १४ ॥ आसनादीनि कर्माणि

ध्यानं नापेक्षते क्वचित् ॥ गच्छंस्तिष्ठन् जपन्वापि
शयानो वान्यकर्मणि ॥ १५ ॥ पातकेनापि वा युक्तो
ध्यानादेव विमुच्यते ॥ नेहाभिक्रमनाशोऽस्ति प्रत्य-
वायो न विद्यते ॥ १६ ॥ स्वल्पमप्यस्य धर्मस्य त्रायते
महतो भयात् ॥ आश्चर्ये वा भये शोके क्षुते वा मम
नाम यः ॥ १७ ॥ व्याजेन वा स्मरेद्यस्तु स याति परमां
गतिम् ॥ महापापैरपि स्पृष्टो देहान्ते यस्तु मां स्म-
रेत् ॥ १८ ॥ पञ्चाक्षरीं वोच्चरति स मुक्तो नात्र संशयः ॥
विश्वं शिवमयं यस्तु पश्यत्यात्मानमात्मना ॥ १९ ॥
तस्य क्षेत्रेषु तीर्थेषु किं कार्यं वान्यकर्मसु ॥ सर्वेण

सर्वदा कार्यं भूतिरुद्राक्षधारणम् ॥२०॥ नित्यं शिवं शिवोक्तेन शिवभक्तिमभीप्सता ॥ नर्यभस्म समायुक्तो [illegible]क्षान्यस्तु धारयेत् ॥२१॥ महापापैरपि स्पृष्टो मुच्यते नात्र संशयः ॥ अन्यानि शैवकर्माणि करोतु न करोतु वा ॥२२॥ शिवनाम जपेद्यस्तु सर्वदा मुच्यते तु सः ॥ अन्तकाले तु रुद्राक्षान्विभूतिं धारयेत्तु यः ॥२३॥ महापापोपपापौघैरपि स्पृष्टो नराधमः ॥ सर्वथा नोपसर्पन्ति तं जनं यमकिंकराः ॥ ॥२४॥ विल्वमूलमृदा यस्तु शरीरमुपलिम्पति ॥ अन्तकालेऽन्तकजनैः स दूरीक्रियते नरः ॥२५॥ ॥

॥ श्रीराम उवाच ॥ ॥ भगवन्पूजितः कुत्र कुत्र वा त्वं प्रसीदसि ॥ तद्ब्रूहि मम जिज्ञासा वर्तते महती विभो ॥ २६ ॥ ॥ ईश्वर उवाच ॥ ॥ मृदा वा गोमयेनापि भस्मना चन्दनेन वा ॥ सिकताभिर्दारुणा वा पाषाणेनापि निर्मिता ॥ २७ ॥ लोहेन वाथ रङ्गेण कांस्यखर्परपित्तलैः ॥ ताम्ररौप्यसुवर्णैर्वा रत्नैर्नानाविधैरपि ॥ २८ ॥ अथवा पारदेनैव कर्पूरेणाथवा कृता ॥ प्रतिमा शिवलिङ्गं वा द्रव्यैरेतैः कृतं तु यत् ॥ २९ ॥ तत्र मां पूजयेत्तेषु फलं कोटिगुणोत्तरम् ॥ मृद्दारुकांस्यलोहैश्च पाषाणेनापि निर्मि-

ता ॥ ३० ॥ गृहिणा प्रतिमा कार्या शिवं शश्वदभी-
प्सता ॥ आयुः श्रियं कुलं धर्मं पुत्रानाप्नोति तैः क्र-
मात् ॥ बिल्ववृक्षे तत्फले वा यो मां पूजय-
ते नरः ॥ परां श्रियमिह प्राप्य मम लोके महीय-
ते ॥ ३२ ॥ बिल्ववृक्षं समाश्रित्य यो मन्त्रान्विधि-
ना जपेत् ॥ एकेन दिवसेनैव तत्पुरश्चरणं भवेत्
॥ ३३ ॥ यस्तु बिल्ववने नित्यं कुटीं कृत्वा वसेन्न-
रः ॥ सर्वे मन्त्राः प्रसिद्ध्यन्ति जपमात्रेण केवल-
म् ॥ ३४ ॥ पर्वताग्रे नदीतीरे बिल्वमूले शिवालये ॥
अग्निहोत्रे केशवस्य संनिधौ वा जपेत्तु यः ॥ ३५ ॥

नैवास्य विघ्नं कुर्वन्ति दानवा यक्षराक्षसाः॥ तत्र स्पृ-
शंति पापानि शिवसायुज्यमृच्छति ॥ ३६ ॥ स्थण्डि-
ले वा जले वन्हौ वायावाकाश एव वा ॥ गुरौ स्वा-
त्मनि वा यो मां पूजयेत्प्रयतो नरः ॥३७॥ स कृत्स्नं
फलमाप्नोति लवमात्रेण राघव ॥ आत्मपूजासमा
नास्ति पूजा रघुकुलोद्भव ॥३८॥ मत्सायुज्यमवाप्नो-
ति चण्डालोऽप्यात्मपूजया ॥ सर्वान्कामानवाप्नोति
मनुष्यः कम्बलासने ॥ ३९ ॥ कृष्णाजिने भवेन्मु-
क्तिर्मोक्ष[illegible]र्व्याघ्रचर्मणि ॥ कुशासने भवेज्ज्ञानमा-
रोग्यं पत्रनिर्मिते ॥४०॥ प्राङ्मुखोदङ्मुखो वापि

जपं पूजां समारभेत् ॥ पाषाणे दुःखमाप्नोति काष्ठे
नानावि[illegible]न् गदान् ॥४१॥ वस्त्रेण श्रियमाप्नोति भू-
मौ मन्[illegible] न सिद्ध्यति ॥ अक्षमालाविधिं वक्ष्ये शृ-
णुष्वावहितो नृप ॥४२॥ साम्राज्यं स्फाटिके स्यात्तु
पुत्रजीवे परां श्रियम् ॥ आत्मज्ञानं कुशग्रन्थौ रु-
द्राक्षः सर्वकामदः ॥४३॥ प्रवालैश्च कृता माला सर्व-
लोकवशप्रदा ॥ मोक्षप्रदा च माला स्यादामलक्याः
फलैः कृता ॥ ४४ ॥ मुक्ताफलैः कृता माला सर्व-
विद्याप्रदायिनि ॥ माणिक्यरचिता माला त्रैलो-
क्यस्त्रीवशंकरी ॥ ४५ ॥ नीलैर्मरकतैर्वापि कृता

शत्रुभयप्रदा ॥ सुवर्णरचिता माला
श्रियम् ॥ ४६ ॥ तथा रौप्यमयी माला कन्यां य-
च्छति कामिताम् ॥ उक्तानां सर्वकामानां दायिनी
पारदैः कृता ॥४७॥ अष्टोत्तरशता माला तत्र स्या-
दुत्तमोत्तमा ॥ शतसंख्योत्तमा माला पञ्चाशन्मध्यमा
मता ॥ ४८ ॥ चतुःपञ्चाशती यद्वा अधमा सप्तविं-
शतिः ॥ अधमा पञ्चविंशत्या यदि स्याच्छतनिर्मि-
ता ॥४९॥ पञ्चाशदक्षराण्यत्रानुलोमप्रतिलोमतः ॥
इत्येवं [illegible]येत्स्पष्टं न कस्मैचित्प्रदर्शयेत् ॥ ५० ॥
वर्णैर्विन्यस्तया यस्तु क्रियते मालया जपः ॥ एक-

वारेण तस्यैव पुरश्चर्या कृता भवेत् ॥ ५१ ॥ सव्य-
पाणिं गुदे स्थाप्य दक्षिणं च ध्वजोपरि ॥ योनिमु-
द्राबन्धश्च भवेदासनमुत्तमम् ॥ ५२ ॥ योनिमुद्रा-
सने स्थित्वा प्रजपेद्यः समाहितः ॥ यं कंचिदपि वा-
मन्त्रं तस्य स्युः सर्वसिद्धयः ॥ ५३ ॥ छिन्ना रुद्धाः
स्तम्भिताश्च मिलिता मूर्च्छितास्तथा ॥ सुप्ता मत्ता
हीनवीर्या दग्धाः प्रत्यर्थिपक्षगाः ॥ ५४ ॥ बाला यौ-
वनमन्त्राश्च वृद्धा मन्त्राश्च ये मताः ॥ योनिमुद्रासने
स्थित्वा मन्त्रानेवंविधान् जपेत् ॥ ५५ ॥ तस्य सि-
द्ध्यन्ति ते मन्त्रा नान्यस्य तु कथंचन ॥ ब्राह्मे मुहूर्त-

शत्रुभयप्रदा ॥ सुवर्णरचिता माला दद्याद्वै महतीं श्रियम् ॥ ४६ ॥ तथा रौप्यमयी माला कन्यां यच्छति कामिताम् ॥ उक्तानां सर्वकामानां दायिनी पारदैः कृता ॥४७॥ अष्टोत्तरशता माला तत्र स्यादुत्तमोत्तमा ॥ शतसंख्योत्तमा माला पञ्चाशन्मध्यमा मता ॥ ४८ ॥ चतुःपञ्चाशती यद्वा अधमा सप्तविंशतिः ॥ अधमा पञ्चविंशत्या यदि स्याच्छतनिर्मिता ॥४[illegible] पञ्चाशदक्षराण्यत्रानुलोमप्रतिलोमतः ॥ इत्येवं [illegible]येत्स्पष्टं न कस्मैचित्प्रदर्शयेत् ॥ ५० ॥ वर्णैर्विन्यस्तया यस्तु क्रियते मालया जपः ॥ एक-

वारेण तस्यैव पुरश्चर्या कृता भवेत् ॥ ५१ ॥ सव्य-
पाणिं गुदे स्थाप्य दक्षिणं च ध्वजोपरि ॥ योनिमु-
द्राबन्ध एष भवेदासनमुत्तमम् ॥ ५२ ॥ योनिमुद्रा-
सने स्थित्वा प्रजपेद्यः समाहितः ॥ यं कंचिदपि वा-
मन्त्रं तस्य स्युः सर्वसिद्धयः ॥ ५३ ॥ छिन्ना रुद्धाः
स्तम्भिताश्च मिलिता मूर्च्छितास्तथा ॥ सुप्ता मत्ता
हीनवीर्या दग्धाः प्रत्यर्थिपक्षगाः ॥ ५४ ॥ बाला यौ-
वनमन्त्राश्च वृद्धा मन्त्राश्च ये मताः ॥ योनिमुद्रासने
स्थित्वा मन्त्रानेवंविधान् जपेत् ॥ ५५ ॥ तस्य सि-
द्ध्यन्ति ते मन्त्रा नान्यस्य तु कथंचन ॥ ब्राह्मं मुहूर्त-

मारभ्या मध्यान्हं प्रजपेन्मनुम् ॥५६॥ अत ऊर्ध्वं कु-
ते जाप्ये विनाशाय भवेद्ध्रुवम् ॥ पुरश्चर्याविधावेवं
सर्वकाम्यफलेष्वपि ॥५७॥ नित्ये नैमित्तिके वापि त-
पश्चर्यासु वा पुनः ॥सर्वदैव जपः कार्यो न दोपस्त-
त्र कश्चन ॥ ५८॥ यस्तु रुद्रं जपेन्नित्यं ध्यायमानो
ममाकृतिम् ॥ षडक्षरं वा प्रणवं निष्कामो विजिते-
न्द्रियः ॥ ५९ ॥ तथाथर्वशिरोमन्त्रं कैवल्यं वा रघू-
त्तम ॥ [illegible] तेनैव च देहेन शिवः संजायते स्वयम्
॥६०॥ [illegible]ते शिवगीतां यो नित्यमेतां जितेन्द्रि-
यः ॥ शृणुयाद्वा स मुक्तः स्यात्संसारान्नात्र संशयः-

॥ ६१ ॥ ॥ सूत उवाच ॥ ॥ एवमुक्त्वा महादेव-
स्तत्रैवान्तरधीयत ॥ रामः कृतार्थमात्मानममन्यत
तथैव [illegible]ः ॥ ६२ ॥ एवं मया समासेन शिवगीता
समीरिता ॥ एतां यः प्रजपेन्नित्यं शृणुयाद्वा समा-
हितः ॥ ६३ ॥ एकाग्रचित्तो यो मर्त्यस्तस्य मुक्तिः
करे स्थिता ॥ अतः शृणुध्वं मुनयो नित्यमेतां समा-
हिताः ॥ ६४ ॥ अनायासेन वो मुक्तिर्भविता नात्र सं-
शयः ॥ कायक्लेशो मनःक्षोभो धनहानिर्न चात्मनः ॥
६५ ॥ पीडास्ति श्रवणादेव यस्मात्कैवल्यमाप्नुयात् ॥
शिवगीतामतो नित्यं शृणुध्वमृषिसत्तमाः ॥ ६६ ॥

ऋषय ऊचुः ॥ अद्यप्रभृति भूयस्त्वमाचार्यः परमो गुरुः ॥ अविद्यायाः परं पारं यस्मात्तारयितासि नः ॥ ६७ ॥ उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ॥ तस्मात्सूतात्मज त्वं नः सत्यं नान्योऽस्ति नो गुरुः ॥ ६८ ॥ इत्युक्त्वा प्रययुः सर्वे सायंसंध्यामुपासितुम् ॥ स्तुवन्तः सूतपुत्रं ते संतुष्टा गोमतीतटम् ॥ ६९ ॥

॥ इति श्रीपद्म० उप० शिवगीता० ब्रह्म० योगशास्त्रे शिवराघवसंवादे गीताधिकारी निरूपणं नाम षोडशोऽध्यायः ॥ १६ ॥



इदं पुस्तकं मुम्बापुर्यां निर्णयसागराख्यमुद्रणयन्त्रालयाधिपतिना मुद्रयित्वा प्राकाश्यं नीतम् ॥ शकाब्दाः १८०६



ॐ श्रीगणेशाय नमः ॥ ॥ अथदेव
र्षिपितृतर्पणप्रयोगः ॥ ॥ अथसंक
ल्पःकर्तव्यः ॥ ॥ ॐ अद्यब्रह्मणो
ह्निद्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे
जम्बुद्वीपे भरतखण्डे आर्यावर्तैकदे
शान्तर्गते अमुकक्षेत्रेकालियुगेकालि
प्रथमचरणे अमुकसंवत्सरे अमुकमा

से अमुकपक्षे अमुकतिथौ अमुकवास
रे अमुकगोत्रोत्पन्नोहं अमुकनामाहं
श्रीपरमेश्वरप्रीत्यर्थं देवर्षिपितृतर्पण
कर्म्मं करिष्ये ॥ इति संकल्प्य ॥ तत
स्त्रीन्दर्भान् प्रागग्रान्दक्षिणपाणौ गृही
त्वा देवानावाहयेत् ॥ विश्वेदेवासइति
गृत्समदऋषिर्विश्वेदेवा देवता गायत्री

च्छन्दः आवाहनेविनियोगः ॥ ॐ वि
श्वेदेवासऽआगंतशृणुतामंऽइमठंहवं
म् ॥ एदम्बर्हिर्निषीदत ॥ विश्वे वाः
शृणुतेमामितिसुहोत्रऋषिर्विश्वेदेव देव
ताः त्रिष्टुप्छन्दःजपेविनियोगः वि
श्वेदेवाःशृणुतेमठंहवंम्मेयेऽअन्त रिक्षे
यउपद्यविष्ठ ॥ येऽअग्निजिह्वाऽउत

वायजंत्वाऽआसद्यास्मिन्बर्हिषिमाद
यध्वम् ॥ ततःसव्यकरान्वारब्धसकु
शदक्षिणकरेण तोयं गृहीत्वाऽक्षतांश्च
देवतीर्थेन ॐकारपूर्वंब्रह्मादिदेवांस्तर्प
येत् ॥ पद्मपुराणे ॥ देवान्ब्रह्मऋषीन्
सर्वांस्तर्पयेदक्षतोदकैः ॥ तर्पयेच्च पि
तॄन्भक्त्या सतिलोदकचन्दनैरिति ॥

योगियाज्ञवल्कय: ॥ यद्युद्धृतंप्रसिञ्चे
त्तु तिलान्संमिश्रयेज्जले ॥ अतोन्य
था तु सव्येन तिला ग्राह्या विचक्षणै:
॥ तत्रैवंप्रकार: ॥ ॐ ब्रह्मातृप्यतामि
त्यभिधायजलमध्येकरस्थाप: प्रक्षि
प्यैवं ॥ ॐ विष्णुस्तृ ० ॥ ॐ रुद्रस्तृ ०
॥ अपांस्पर्श: ॥ ॐ प्रजापतिस्तृ ० ॥

ॐ देवास्तृप्यं०॥ॐ छंदांसितृ० ॥ॐ
वेदास्तृ०॥ ॐ ऋषयस्तृ०॥ ॐपुरा
णाचार्यास्तृ०॥ॐ गन्धर्वास्तृप्यं०
॥ॐ इतराचार्यास्तृ० ॥ ॐ संवत्सरः
सावयवस्तृप्य० ॥ ॐ देव्यस्तृप्य
न्तां॥ॐ अप्सरसस्तृप्यं०॥ ॐ देवा
नुगास्तृ०॥ ॐ नागास्तृ०॥ॐ सा

गरास्तृ० ॐ पर्वतास्तृ० ॥ ॐ सरि
तस्तृ० ॥ ॐ मनुष्यास्तृ० ॐ यक्षा
स्तृ० ॥ ॐ रक्षांसितृ० ॥ अपांस्पर्शः
ॐ पिशाचास्तृ० ॥ ॐ सुपर्णास्तृ ० ॥
ॐ भूतानितृ० ॥ ॐ पशवस्तृप्यं ० ॥
ॐ वनस्पतयस्तृ० ॥ ॐ ओषधयस्तृ०
॥ ॐ भूतग्रामश्चतुर्विधस्तृप्यतां ॥

इति प्रत्येकमेकैकेन चुलुकेन तर्पयि
त्वाउत्तराभिमुखो निवीत्यंजलौ तिर
श्वःकुशान् कृत्वाऽञ्जलिनापोगृहीत्वा
॥ ॐ संनकस्तृप्यतामित्यभिधायप्रा
जापत्यतीर्थेन द्वौद्वावञ्जली जलेदत्वा
॥ॐसनन्दनस्तृ०॥ॐसनातनस्तृ०॥
ॐकपिलस्तृ० ॥ ॐ आसुरिस्तृ० ॥

ॐ वोढुस्तृप्यतां ॥ ॐ पञ्चशिखस्तृ०
॥ एवंद्वौद्वावञ्जली एकैकस्मैदत्वा दक्षि
णामुखः प्राचीनावीती सव्यं जान्वा
च्यांगुष्ठेनतिलानादाय दक्षिणपाणौ
गृहीत्वा तानेव कुशान्कृत्वा उशंतस्त्वे
त्यनयाकव्यवाडनलादीनावाह्यआय
न्तुन इतिजापित्वा कव्यवाडनलादीं

स्तर्पयेत् ॥ तद्यथा ॥ उशन्तस्त्वेति
प्रजापतिर्ऋषिः पितरोदेवता अनुष्टुप्
छन्दः आवाहनेवि० ॥ ॐ उशन्त
स्त्वानिधीमह्युशन्तः समिधीमहि ॥
उशन्नुशत ऽआवहपितृन्हविषे ऽअ
त्तवे ॥ आयन्तुन इत्यस्य शङ्खऋषिः
पितरोदेवताः त्रिष्टुप्छन्दः जपेवि ०॥

ॐ आयन्तुनः पितरः सोम्यासोऽग्नि
ष्वात्ताःपथिभिर्देवयानैः॥अस्मिन्यज्ञे
स्वधयामदन्तोऽधिब्रुवन्तुतेवन्त्वस्मा
न्॥ ततोऽद्भिरञ्जलिंप्रपूर्य पितृतीर्थे
नाञ्जलिंक्षिपेत् ॥ ॐ कव्यवाडनल
स्तृ० ॥ ॐ सोमस्तृ०॥ ॐ यमस्तृ०॥
ॐ अग्निष्वात्ताः पितरस्तृप्यंतां ॥ ॐ

सोमपाःपितरस्तृ० ॥ ॐ बर्हिषदः पि
तरस्तृ० ॐ यमायनमः ॥ ॐ ध
र्मराजायनमः ॥ ॐ मृत्यवेनमः ॥
ॐ अन्तकायनमः॥ ॐ वैवस्वतायन
मः ॥ ॐ कालायनमः ॥ ॐ सर्वभूत
क्षयायनमः ॥ ॐ औदुम्बरायनमः ॥
ॐ दध्नायनमः ॥ ॐ नीलायनमः॥

ॐ परमेष्ठिनेनमः ॥ ॐ वृकोदरायन
मः ॥ ॐ चित्रायनमः ॥ ॐ चित्रगु
प्तायनमः ॥ गोत्रनामपूर्वकंसव्यंजा
न्वाच्यपितृतीर्थेन दक्षिणामुखेन द्वि
गुणदर्भेण तिलमिश्रितेनजलेन पि
त्रादिभ्यस्त्रींस्त्रीनजलीन्दद्यात् ॥ अंज
लिनियममाहव्यासः॥ एकैकमंजलिंदे

वाद्वौद्वौतुसनकादयः॥ अथान्तिपितर
स्त्रींस्त्रींस्त्रियस्त्वेकैकमञ्जलिमिति।अद
कोगोत्रोस्मत्पिताअदकःशर्मातृप्यता
मिदंजलं तस्मैस्वधाइत्येकाञ्जलिंदत्वै
वमपरमञ्जलिद्वयं पित्रेदद्यात्॥ततअद
कोगोत्रोस्मत्पितामहअदकः शर्मातृ
प्यतामिदंजलंतस्मैस्वधा॥एवमपरम

ञ्जलिद्वयंपितामहायदत्वा॥ अदकोगो
त्रोस्मत्प्रपितामह अदकःशर्मातृप्यता
मिदंजलंतस्मैस्वधा॥एवमपरमञ्जलि
द्वयंप्रपितामहायदत्त्वा ॥ ततःप्रसेका
ख्यंकर्मकुर्यात्।तद्यथा॥उदीरतामित्या
दिषडर्चपर्यन्तंमधुवाताइत्यृचपर्यन्तं
यथाक्रमं मंत्रानुपांश्वाम्नायस्वरेण प

ठन्नञ्जलिकृतापोजलाधिकरणे प्रक्षि
पेत् ॥ उदीरतामाङ्गिरसआयन्तुन इति
तिसृणांशङ्खः प्रजापतिर्ऋषिःपितरोदे
वताःत्रिष्टुप्छन्दः ऊर्जमित्यस्यप्रजा
पतिर्ऋषिरापोदेवताविराट्छन्दः पितृ
भ्यइत्यस्यप्रजापत्याश्विसरस्वत्यऋ
षयः पितरोदेवतायजूंषिछं० येचेहेत्य

स्यप्रजापत्याश्विसरस्वत्यऋषयः पित
रोदेवताः त्रिष्टुपछंदः मधुवाताइतितिसृणां गौतमऋषिर्विश्वेदेवादेवता गायत्रीछन्दः सर्वेषांमंत्राणांप्रसेकाख्ये
कर्मणि विनियोगः॥ ॐ उदीरतामवरऽउत्परासऽउन्मध्यमाःपितरः सोम्यासः॥ असुंय ईयुरवृका ऋतज्ञास्तेनो

वन्तुपितरोहवेषु ॥ १ ॥ ॐ आङ्गिरसो
नः पितरोनवग्वा अथर्वाणोभृगवः
सोम्यासः ॥ तेषांवयꣳसुमतौयज्ञि
यानामपिभद्रेसौमनसेस्याम ॥ २ ॥
ॐ आयन्तुनः पितरःसोम्यासोऽग्नि
ष्वात्ताःपथिभिर्देवयानैः ॥ अस्मिन्य
ज्ञे स्वधया मदन्तोधिब्रुवन्तुतेवन्त्व

स्मान्॥३॥ ॐ ऊर्ज्जंवहन्तीरमृतंघृत
म्पयः कीलालम्परिस्रुतम् ॥ स्वधा
स्थ तर्पयतमेपितॄन् ४ ॥ ॐ पितृ
भ्यः स्वधायिभ्यः स्वधानमः पितामु
हेभ्यः स्वधायिभ्यः स्वधानमः प्रपि
तामहेभ्यः स्वधायिभ्यः स्वधानमः ॥
अक्षन्पितरोमीमदन्तापितरोतीतृप्य.

पं

त-

न्तापितरःपितरःशुन्धध्वं ॥ ५ ॥ ॐ य

१०

चेहपितरोयेचनेहयाँश्च विद्मयाँ२ऽउ

चनप्रविद्म ॥ त्वंवेत्थयातिजातवेदः

स्वधाभिर्यज्ञठंसुकृतंजुषस्व ॥ ६ ॥

ॐ मधुवाताऽऋतायतेमधुक्षरन्तिसि

न्धवः ॥ माध्वीर्नःसन्त्वोषधीः ॥ ७ ॥

१०

ॐ मधुनक्तमुतोषसोमधुमत्पार्थिवठं

रजंः॥मधुद्यौरस्तुनःपिता ॥८॥मधुमा
न्नोव्वनस्पतिर्म्मधुमाँ२अस्तुसूर्यः।मा
ध्वीर्गावोभवन्तुनः ॥९॥ ततस्तृप्यध्वं
तृ० ॥३॥ इत्यंजलित्रयं पित्रादिभ्योद
द्यात्॥ततोमातृतर्पणं कुर्यात् ॥ तथाच
क्रममाहव्यासः।पितृभ्यःप्रथमंदद्यात्त
तोमातृभ्यएवच ॥ ततोमातामहाना

त- ११

श्चतत्पत्नीनांततोजलं॥ मरीचिः ॥ अ
न्तर्मातामहानकृत्वामातृणा यःप्रय
च्छति ॥ उदकंपिण्डदानंचनरकंसतुग
च्छति ॥ मातृतर्पणेविशेषः ॥ यथा ॥
अदको गोत्राऽस्मन्माताअमुकीदेवीतृ
प्यतामिदंजलंतस्यैस्वधाएवंत्रिर्दद्या
त्॥अदकोगोत्रास्मत्पितामहीअमुकी

देवीतृप्यता०॥ अद्यकोगोत्रास्मत्प्रपि
तामही अमुकीदेवीतृप्य ०॥ इतिवा
क्येनमात्रादिभ्यस्त्रींस्त्रीनञ्जलीन्दद्या
त्॥ वृद्धशातातपः॥ मातृमुख्याश्चया
स्तिस्रस्तासांदद्याज्जलांजलीन् ॥ त्रीं
स्त्रीनेवतथान्यासां दद्यादेकैकमंजलि
मिति॥ ततोनमोवइत्यष्टानांप्रजापति

त- १२ 

ऋषिः रसशोषजीवस्वधाघोरमन्युपि
तरो देवताःपाठेविनियोगः ॥ ॐ नमो
वःपितरोरसायनमोवःपितरः शोषाय
नमोवः पितरोजीवायनमोवः पितरः
स्वधायैनमोवः पितरोघोरायनमोवः
पितरोमन्यवेनमोवःपितरः पितरोन
मोवोगृहान्नः पितरोदत्तसतोवःपितरो

देष्मैतद्वः पितरोवासः॥१॥इतिपठित्वा
अद्दकोगोत्रोस्मन्मातामहः अदकःश
र्मातृप्यतामिदंजलंतस्मैस्वधाइतिमा
तामहायांजलित्रयंदद्यात्॥अदकोगो
त्रोस्मत्प्रमातामहोऽदकः शर्मातृ० स्व
धाइतिप्रमातामहायाञ्जलित्रयं दद्या
त्अदकोगोत्रोस्मद्वृद्धप्रमातामहोअद

त॰ १२ १२

कः॰ स्वधाइतिवृद्धप्रमाता॰दद्यात्॥
तत अदकोगोत्रास्मन्मातामही अमु
कीदेवीतृप्य॰ स्वधा॰॥इतिमाताम
ह्यै॰ अदकोगोत्रास्मत्प्रमातामही अ
मु॰स्वधा इति॰प्रमाता॰ अदकोगो
त्रास्मद्वृद्धप्रमातामही अमु॰स्वधा॰
इति॰वृद्धप्रमातामह्यै॰ एकैकमञ्जलिं

पं॰ १२

द्द्यात्। ततःआचार्यादीन्नामगोत्रस्व
धाकारैस्तर्पयेत्॥ आचार्यतत्पत्नीभा
र्यापुत्रपितृव्य तत्पत्नी मातुल तत्पत्नी
सुहृच्छिष्यांस्तर्पयेत् ॥ अदको गो
त्रोस्मद्गुरुरदकः शर्मातृप्यतामिदंजलं
तस्मैस्वधा ॥ अदकोगोत्रास्मद्गुरुपत्नी
अमुकीदेवीतृप्यतामिदंजलंतस्यैस्व

धेत्यादि॥ततोयेबान्धवाबान्धवावाये
न्यजन्मनिबान्धवा:।तेसर्वेतृप्तिमाया
न्तुयेचास्मत्तोयकांक्षिण:॥येमेकुलेलु
प्तपिण्डा:पुत्रदारविवर्जिता:॥ तेषांहिद
त्तमक्षय्यमिदमस्तुतिलोदकं॥आब्रह्म
स्तम्बपर्यन्तंदेवर्षिपितृमानवा:॥तृप्य
न्तुपितर:सर्वेमातृमातामहादय: ॥ अ

तीतकुलकोटीनांसप्तद्वीपनिवासिनां॥
आब्रह्मभुवनाँल्लोकानिदमस्तुतिलोद
कं॥ इतिमंत्रैः पृथक्पृथक्सतिलमुदकं
दद्यात् ॥ इत्यत्रसानाञ्जलिंदद्यात् ॥ यो
गियाज्ञवल्क्यः ॥ वस्त्रनिष्पीडितंतोयं
स्नातस्योच्छिष्टभागिनां ॥ भागधेयं
श्रुतिः प्राहतस्मान्नपीडयेज्जले ॥ ततः

पं

त० धेत्यादि॥ततोयेबान्धवाबान्धवावाये

१४ न्यजन्मनिबान्धवाः।तेसर्वेतृप्तिमाया

न्तुयेचास्मत्तोयकांक्षिणः॥येमेकुलेलु

प्तपिण्डाःपुत्रदारविवर्जिताः॥ तेषांहिद

त्तमक्षय्यमिदमस्तुतिलोदकं॥आब्रह्म

१५ स्तम्बपर्यन्तंदेवर्षिपितृमानवाः॥तृप्य

न्तुपितरःसर्वेमातृमातामहादयः॥ अ

तीतकुलकोटीनांसप्तद्वीपनिवासिनां॥
आब्रह्मभुवनाँल्लोकानिदमस्तुतिलोद
कं॥ इतिमंत्रैः पृथक्पृथक्सतिलमुदकं
दद्यात् ॥ इत्यत्रसानाञ्जलिंदद्यात् ॥ यो
गियाज्ञवल्क्यः ॥ वस्त्रनिष्पीडितंतोयं
स्नातस्योच्छिष्टभागिनां ॥ भागधेयं
श्रुतिः प्राहतस्मान्नपीडयेज्जले ॥ ततः

स्नानवस्त्रप्रान्तंनिष्पीडयेत् ॥ येकेचा
स्मत्कुलेजाताअपुत्रागोत्रिणोमृताः ॥
तेगृह्णंतुमयादत्तंवस्त्रनिष्पीडनोदकं॥ ए
वंस्नानवस्त्रंनिष्पीड्यप्रागुदग्वातर्पणा
र्थंकुशान् परित्यज्ययज्ञोपवीतीभूत्वा
ऽऽचम्य सूर्यायअर्घ्यंदद्यात्॥ एहिसूर्य
सहस्रांशोतेजोराशेजगत्पते॥ अनुकंप

यमांभक्त्यागृहाणार्घ्यं नमोस्तुते ॥ इ
तिसूर्याय अर्घ्यं दत्त्वा ॥ यस्यस्मृत्या
चनामोक्त्यातपोयज्ञक्रियादिषु ॥ न्यू
नंसंपूर्णतांयातिसद्योवंदेतमच्युतं ॥ इ
तिमंत्रेणकर्मस्वरूपीजनार्दनवासुदेवः
प्रीयतांनमम ॥ ओंतत्सत् ॥ इतिदेवर्षि
पितृतर्पणं समाप्तिमगमत् ॥ श्रीरस्तु ॥

त० १६

इदं पुस्तकं कल्याणग्रामे श्रीकृष्णदासात्मज गंगाविष्णुना स्वकीये "लक्ष्मीवेंकटेश्वराख्य" मुद्रणयन्त्रालयेऽङ्कितम्। शके१८१४

गंगाविष्णु श्रीकृष्णदास.

"लक्ष्मीवेङ्कटेश्वर"

छापाखाना कल्याण—(मुंबई.)

KALYAN—BOMBAY.

पं १६

